# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 658.




# श्रीभाष्यम् ।

बादरायणप्रणीतवेदान्तसूत्रस्य

रामानुजाचार्य्यकृतं विशिष्टाद्वैतपरं व्याख्यानम् ।

# S'RI BHA'SHYAM

BY

PANDIT RA'MANATHA TARKARATNA.

FASCICULUS 1.

---

CALCUTTA:

PRINTED BY B. N. NANDI, AT THE VALMIKI PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1888.

# श्रीभाष्यम् ।

## प्रथमाध्यायस्य

### प्रथमः पादः ।

श्रीमते रामानुजाय नमः ।

अखिलभुवनजन्मक्षेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा (क) ॥
पाराशर्यवचःसुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां
संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीवनीम् ।

---

(क) क्षेमा स्थितिः पालनमित्यर्थः । आदिपदेन मोक्षपरिग्रहः । तथाहि, यतो वा इमानि भूतानीति श्रुतौ, जायन्त—इति सृष्टिरुक्ता । जीवन्तीति स्थितिः । अभिसंविशन्तीति लयो दर्शितः । यत् प्रयन्तीति मोक्षः प्रतिपादित—इति भावः । शेमुषी प्रज्ञा ज्ञानमित्यनर्थान्तरम् । अतएव भक्तिरूपापन्नमेव वेदनं तत्त्वतो भगवत्प्राप्तिसाधनम् । न तु केवलं ज्ञानमिति स्वसिद्धान्तसूचनम् । भक्तिरपि निरतिशयप्रियानन्यप्रयोजन सकलेतरवैतृष्ण्यावहज्ञानविशेष—इति वेदार्थसंग्रहः ॥

पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थिता-
मानीतां तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहम्॥

भगवद्बोधायन*कृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः सञ्चिक्षिपुः, तन्मतानुसारेण सूत्राक्षराणि † व्याख्यायन्ते (क)।

(क) अथ भाष्यार्थसुखग्रहणाय संक्षेपेण शास्त्रार्थः, अधिकरणार्थः, सूत्रार्थश्च उपन्यस्यते। तत्र प्रथमेऽध्याये, सर्वं वेदान्तवाक्यजातं सार्वज्ञ्यसत्यसङ्कल्पत्वादिगुणयुक्तं ब्रह्मैव जगत्कारणतया प्रतिपादयन्तीति स्थापितम्। तत्र च प्रथमे पादे, प्रधानपुरुषाविव जगत्कारणतया वेदान्ताः प्रतिपादयन्तीत्याशङ्क्य, सर्वज्ञं सत्यसङ्कल्पं निरवद्यं समस्तकल्याणगुणाकरं ब्रह्मैव जगत्कारणतया प्रतिपादयन्तीत्युक्तम्। द्वितीयतृतीयचतुर्थेषु पादेषु, कानिचित् वेदान्तवाक्यानि प्रधानादिप्रतिपादनपराणीति तन्मुखेन सर्वाक्षेपमाशङ्क्य तान्यपि ब्रह्मपराणीत्युक्तम्। तत्र स्पष्टजीवादिलिङ्गकानि वाक्यानि द्वितीये निरूपितानि। अस्पष्टलिङ्गकानि तृतीये। चतुर्थे तु, प्रधानादिप्रतिपादनच्छायानुसारीणीति विशेषः॥

द्वितीयेऽध्याये, प्रथमाध्यायोक्तार्थस्य दुर्धर्षणत्वप्रतिपादनेन दृढिमा उच्यते। तत्र प्रथमे पादे, सांख्यादिस्मृतिविरोधात् न्यायविरोधाच्च प्रसक्तदोषः परिहृतः। द्वितीये, सांख्यादिवेदबाह्यपक्षप्रतिक्षेपमुखेन अस्यैव आदरणीयता स्थिरीकृता। तृतीयचतुर्थयोः, वेदान्तवाक्यानामन्योन्यप्रतिषेधादिदोषगन्धाभावख्यापनाय वियदादीनां ब्रह्मकार्यताप्रकारो विशोध्यते। तत्र तृतीये, चिदचित्प्रपञ्चस्य ब्रह्मकार्यत्वे सत्यपि, अचिदंशस्य स्वरूपान्यथाभावेन कार्यत्वं, चिदंशस्य स्वरूपान्यथाभावा-

* बौधायनेति ख-ग-चिह्नितपुस्तकयोः पाठः।

† व्याख्यास्यन्त—इति ख०।

भावेन ज्ञानसङ्कोचविकासरूपेण स्वभावान्यथाभावेन कार्यत्वमुदितम्। चतुर्थे तु, जीवोपकरणानामिन्द्रियादीनामुत्पत्तिरिति। अनेनाध्यायद्वयेन मुमुक्षुभिरुपास्यं निरस्तनिखिलदोषगन्धम् अनवधिकातिशयासंख्येय-कल्याणगुणगणं निखिलजगदेककारणं ब्रह्मेति प्रतिपादितम्। उत्तरेण च अध्यायद्वयेन तद्विवेकेन ब्रह्मोपासनप्रकारः, तत्फलभूतं मोक्षस्वरूपञ्च चिन्त्यते॥

तत्र तृतीयाध्यायस्य प्रथमे पादे, ब्रह्मोपासिषोत्पत्तये जीवस्य संसरतो दोषाः प्रकीर्तिताः। द्वितीये च, उपासनोत्पत्तये ब्रह्मणो निरस्तनिखिल-दोषताकल्याणगुणाकरतारूपोभयलिङ्गता प्रतिपाद्यते। तृतीये तु, ब्रह्मोपासनैकत्वनानात्वकथनपूर्वकम्, उपासनेषु उपसंहार्यानुपसंहार्यगुण-विशेषाः प्रपञ्चिताः। चतुर्थे च, उपासनस्य वर्णाश्रमधर्मेतिकर्तव्यताकत्व-मुक्तम्॥

चतुर्थेऽध्याये, ब्रह्मोपासनाफलचिन्ता क्रियते। तत्र प्रथमे पादे, ब्रह्मोपासनाफलकथनाय उपासनास्वरूपनिरूपणपूर्वकं तदनुष्ठानप्रकारः, विद्यामाहात्म्यञ्च उच्यते। द्वितीये तु, ब्रह्मोपासिनां तत्प्राप्तिगत्युत्क्रम-प्रकारश्चिन्त्यते। तृतीये च, अर्चिरादिस्वरूपनिरूपणपूर्वकम्, अर्चिरादि-नैव ब्रह्मप्राप्तिरिति प्रतिपाद्यते। चतुर्थे तु, मुक्तस्य ब्रह्मानुभवप्रकार-श्चिन्त्यत—इति॥

अथ, आत्मा वा अरे द्रष्टव्यः श्रोतव्य—इति श्रुतिविहितश्रवणाद्या-त्मकं ब्रह्ममीमांसाशास्त्रं विषयः। तत्र ब्रह्मविषया मीमांसा किमारम्भ-णीया, उत नेति संशयः। तत्र नारम्भणीयेति पूर्वपक्षः। कुतः, परि-निष्पन्नेऽर्थे शब्दस्य बोधनसामर्थ्याभावादिति। अयमभिप्रायः, वृद्धव्यव-हारादन्यत्र व्युत्पत्त्यसम्भवात्, व्यवहारस्य च कार्यबुद्धिपूर्वकत्वेन कार्य एवार्थे शब्दशक्त्यवधारणात्, परिनिष्पन्नेऽर्थे ब्रह्मणि न वेदान्ताः प्रमाण-मिति तद्विचाररूपा ब्रह्ममीमांसा नारम्भणीयेति। राद्धान्तस्तु, बालानां

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अत्रायम् 'अथ' शब्द (क) आनन्तर्ये भवति। 'अतः' वृत्तस्य हेतुभावे। अधीतसाङ्ग*शिरस्कवेदस्य अधिगताल्पास्थिरफल-

---

मातापितृप्रभृतिभिः अम्बाताततमातुलशशिपशुमृगादिषु अङ्गुल्यादिना निर्दिश्य, तत्तदभिधायकान् शब्दान् प्रयुञ्जानैः क्रमेण बहुशः शिक्षितानां तत्तच्छब्दश्रवणानन्तरं स्वात्मन्येव तत्तदर्थबुद्ध्युत्पत्तिदर्शनात् शब्दार्थयोः सम्बन्धान्तरादर्शनात् सङ्केतयितृपुरुषज्ञानाच्च बोधकभाव एव शब्दार्थयोः सम्बन्ध—इति निश्चिन्वानानां परिनिष्पन्नेऽप्यर्थे शब्दस्य बोधकत्वावधारणं सम्भवतीति ब्रह्मणि वेदान्तानां प्रामाण्यात् तदर्थविचाररूपा ब्रह्ममीमांसा आरम्भणीयेति। अधिकरणञ्च, विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥ इत्युक्तलक्षणम्। विशयः संशयः ॥

सूत्रार्थस्तु, 'अथ' इत्यानन्तर्ये, 'अत' इति वृत्तस्य हेतुभावे, ब्रह्मणो जिज्ञासा 'ब्रह्मजिज्ञासा' ज्ञातुमिच्छा जिज्ञासा। तथाच पूर्ववृत्तात् अल्पास्थिरफलकेवलकर्माधिगमादनन्तरं, कर्मफलस्य सान्तत्वसातिशयत्वादिनिश्चयात् 'अत' एव हेतोः अनन्तस्थिरफलब्रह्माधिगमः कर्तव्य—इति ॥

(क) अत्र 'अथ'शब्दः न मङ्गलार्थकः, वेदान्तानां ब्रह्मस्वरूपगुणादिप्रतिपादनपरतया सर्वेषामपि वाक्यपदवर्णमात्राणां मङ्गलरूपत्वेन मङ्गलान्तरनिरपेक्षत्वात्। नाप्यधिकारपरः, शब्दादिवत् ब्रह्मणोऽधिकार्यत्वाभावात्। नाप्यारम्भपरः, वेदान्तानामनादित्वाभ्युपगमात्। अन्यथा, औपचारिकत्वापत्त्या अप्राधान्यप्रसङ्गात्। अतः परिशेषादानन्तर्यमेव ग्राह्यम्। तच्च न हेतुभूतानन्तर्यम्। 'अतः' शब्दोपादानादिति रहस्यम् ॥

---

* सशिरस्केति ख०।

केवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्य अनल्पस्थिरफल-ब्रह्मजिज्ञासा हि अनन्तरभाविनी। ब्रह्मणो जिज्ञासा 'ब्रह्म-जिज्ञासा'। ब्रह्मण—इति कर्मणि षष्ठी। कर्तृकर्मणोः कृतीति विशेषविधानात्॥ यद्यपि सम्बन्धसामान्यपरिग्रहेऽपि जिज्ञा-ासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः, तथापि आक्षेपतः ाप्राप्ताभिधानिकस्यैव ग्राह्यत्वात् कर्मणि षष्ठी गृह्यते। न च, प्रतिपदविधाना * षष्ठी न समस्यत—इति कर्मणि षष्ठ्याः समासनिषेधः शङ्कनीयः। कृद्योगा† षष्ठी समस्यत—इति प्रतिप्रसवा‡सद्भावात् (क)। 'ब्रह्म'शब्देन स्वभावतो निरस्तनिखिल-

(क) षष्ठी शेष—इति सूत्रव्याख्यायां कर्मादिभ्योऽन्यः प्रातिपदि-ार्थव्यतिरिक्तः स्वस्वामिसम्बन्धादिः शेष—इति काशिकाकृत्। अतः त्विह शेषषष्ठीपरिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते, म्बन्धसामान्यस्य विशेषनिष्ठत्वात्। तथा च, शेषषष्ठ्यां ब्रह्मसम्बन्धिनी ज्ञासा प्रतिज्ञाता भवति। तत्र च यानि ब्रह्माश्रितानि लक्षण-माणयुक्तिज्ञानभक्तिसाधनफलानि, तेषामपि विचारः प्रतिज्ञातो वति। तज्जिज्ञासाया अपि ब्रह्मज्ञानार्थत्वेन ब्रह्मसम्बन्धित्वादिति चेत्— । जिज्ञासेत्यत्र सन्प्रत्ययवाच्याया इच्छाया ज्ञानं कर्म, ज्ञानस्य च ब्रह्म र्म। तत्र, सकर्मकक्रियायाः कर्मज्ञानं विना ज्ञातुमशक्यत्वात्, इच्छाया षयज्ञानजन्यत्वाच्च प्रथमापेक्षितं कर्मैव षष्ठ्या वाच्यं, न शेष—इति॥ ञ्च, तद्विजिज्ञासस्व—इति मूलश्रुत्यनुसारात् कर्मण्येव षष्ठी, न शेषे।

* विधाना चेति ग०।

† योगा चेति ख०।

‡ सम्भवादिति ख०।

दोषोऽनवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते। सर्वत्र बृहत्त्वगुणयोगेन 'ब्रह्म'शब्दः। बृहत्त्वञ्च स्वरूपेण गुणैश्च यत्र अनवधिकातिशयं, सोऽस्य मुख्यार्थः। स च सर्वेश्वर एव, अतो 'ब्रह्म'शब्दस्तत्रैव मुख्यवृत्तः। तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः, अनेकार्थकल्पनायोगाद्भगवच्छब्दवत् (क) तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः। अतः सर्वेश्वरो जिज्ञासाकर्मभूतं 'ब्रह्म'। ज्ञातुमिच्छा 'जिज्ञासा', इच्छाया इष्यमाणप्रधानत्वात्, इष्यमाणं ज्ञानमिह विधीयते॥

मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वादुपरितनभागावसेयस्य* ब्रह्मज्ञानस्य अनन्ताक्षयफलत्वाच्च पूर्ववृत्तात्कर्मज्ञानादनन्तरम्, †'अत' एव हेतोः 'ब्रह्म' ज्ञातव्यमित्युक्तं भवति।

---

अतएव जिज्ञासापदस्य अप्प्रत्ययान्तत्वेन, कृदन्तस्य योगे विहितं प्रथमापेक्षितञ्च कर्मत्वं विहाय, परोक्षमशब्दं कल्पयतो वृत्तिकारस्य व्याख्यानं न समीचीनमिति भावः॥

(क) गुणः सादृश्यं, योगः सम्बन्धः, तस्मात्। यथा खलु, भगवानिति शब्दोऽयं तथा पुरुष इत्यपि। निरुपाधौ च वर्तेते वासुदेवे सनातने। इति वासुदेवे सर्वेश्वर एव भगच्छब्दस्य मुख्यवृत्तित्वेऽपि, ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा। इत्युक्तेरन्यत्र किञ्चित्सादृश्यदर्शनेन देवर्षिलिङ्गिप्रभृतिषु भगवच्छब्दः प्रयुज्यते, तथा ब्रह्मशब्दोऽपीति भावः॥

---

* भागावशेषस्येति ख०।

† तत एवेति ग०।

तदाह वृत्तिकारः, वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषेति। वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यं*, संहितमेतच्छारीरकं† जैमिनीयेन षोड़शलक्षणेनेति शास्त्रैकत्वसिद्धिरिति। अतः, प्रतिपिपादयिषितार्थभेदेन षट्कभेदवदध्यायभेदवच्च पूर्वोत्तर-मीमांसयोर्भेदः (क)॥

मीमांसाशास्त्रम्,—अथातो धर्मजिज्ञासेत्यारभ्य, अनावृत्तिः शब्दादनावृत्तिः शब्दादित्येवमन्तं ‡सङ्गतिविशेषेण विशिष्टक्रमम्। तथाहि, प्रथमं तावत्, स्वाध्यायोऽध्येतव्य—इत्यध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते। तच्च अध्य-यनं किंरूपं कथञ्च कर्तव्यमित्यपेक्षायाम्, अष्टवर्षं ब्राह्मण-मुपनयीत, तमध्यापयेदित्यनेन,—

---

(क) वेदो हि कर्मब्रह्मप्रतिपादकपूर्वोत्तरभागाभ्यां द्विधा भिन्नः। तत्र आराधनकर्मप्रतिपादकं पूर्वकाण्डम्, आराध्यप्रतिपादकमुत्तरकाण्डम्। अतस्तद्विचारात्मकशास्त्रस्य प्रतिपाद्यभेदेन पूर्वमीमांसा, उत्तरमीमांसा चेति व्यपदेशः। यथा खलु द्वादशाध्यायात्मिकाया अपि पूर्वमीमां-सायाः प्रतिपाद्यभेदेन पूर्वषट्कम्, उत्तरषट्कमिति च व्यवहारः। अत एव द्वादशलक्षणेन मिलितानि उत्तरमीमांसायाः समन्वयाविरोधसाधन-फलाभिधेयानि चत्वारि लक्षणानीति मीमांसाशास्त्रस्य षोड़शलक्षण-लक्षितत्वमिति सुष्टूक्तम्। लक्षणानि अध्यायाः॥

---

* ऐक्यं शास्त्रीयमिति क०, ऐक्यशास्त्रीयमिति ख०, ग०। आदर्शेषु सर्वत्रैव लेखकप्रमादकृतः पाठ—इत्युपेक्षितः।

† शारीरिकमिति ख०।

‡ सङ्गतविशेषणविशिष्टक्रममिति ख०।

श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान् ॥

इत्यादिव्रतनियमविशेषोपदेशैश्च अपेक्षितानि विधीयन्ते एवं सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीत व्रतनियमविशेषयुक्तस्य आचार्योच्चारणानूच्चारणमक्षरराशि ग्रहणफलम् अध्ययनमित्यवगम्यते। अध्ययनञ्च स्वाध्याय संस्कारः, स्वाध्यायोऽध्येतव्य—इति स्वाध्यायस्य कर्मत्वावगमात् संस्कारो हि नाम, कार्यान्तरयोग्यताकरणम्। संस्कार्यत्व* स्वाध्यायस्य युक्तं, धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयतत्साधना बोधित्वात्, जपादिना † स्वरूपेणापि तत्साधनत्वाच्च। एवमध यनविधिर्मन्त्ववन्नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति। अध यनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित दर्शनात्, गृहीतात् स्वाध्यायादवगम्यमानात् प्रयोजनवतोऽर्थ नापाततो दृष्ट्वा, ‡तत्स्वरूपप्रकारविशेषनिर्णयफलवेदवाक विचाररूपमीमांसाश्रवणे अधीतवेदः पुरुषः स्वयमेव प्रवर्तते ॥

तत्र कर्मविधिस्वरूपे निरूपिते, कर्मणामल्पास्थिरफलत्वं दृष्ट्व अध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु च अमृतस्वरूपानन्त स्थिरफलापातप्रतीतेः तन्निर्णय§फलवेदान्तवाक्यविचाररूपशारी रकमीमांसायामधिकरोति। तथाच, वेदान्तवाक्यानि केवलक

* संस्कार्यत्वमिति ग०।

† जपतप आदिनेति ख०।

‡ तदिति ख-चिह्नितपुस्तके न पठ्यते।

§ निर्णायकेति ख०।

लस्य क्षयित्वं, ब्रह्मज्ञानस्य च अक्षयफलत्वं दर्शयन्ति। तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते। त्वदेवास्य तद्भवति। नह्यध्रुवैः प्राप्यते ध्रुवं * कर्मभिः। प्लवा ह्येते अदृढ़ा यज्ञरूपाः। परीक्ष्य लोकान् कर्मचितान् † ब्राह्मणो निर्वेदमायात्। नास्त्यकृतः§ कृतेन। तद्विज्ञानार्थं स गुरु¶मेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं, तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय, येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्। ब्रह्मविदाप्नोति परम्। न पुनर्भवे, तदेकं पश्यति, न पश्यो मृत्युं‖ पश्यति। स स्वराड् भवति। तमेवं विद्वानमृत इह भवति। तमेवं विदित्वातिमृत्युमेति, नान्यः पन्था अयनाय विद्यते। पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति—इत्यादीनि॥

ननु च, साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वं, स्वर्गादीनाञ्च क्षयित्वं, ब्रह्मोपासनस्य अमृतफलत्वञ्च ज्ञायते एव। अनन्तरं मुमुक्षुर्ब्रह्मजिज्ञासायामेव प्रवर्त्ततां, किमर्था **धर्मविचारापेक्षा। एवं तर्हि शारीरकमीमांसायामपि न प्रवर्त्ततां, साङ्गवेदाध्ययनादेव कृत्स्नस्य ज्ञातत्वात्। सत्यम्, आपाततः

* कर्मभिरिति ख-चिह्नितपुस्तके नास्ति। लेखकप्रमाद एवात्र कारणम्।

† तत्प्लवा—इति क०।

‡ आत्रह्मण—इति क०।

§ अकृतमिति ख०।

¶ सद्गुरुमिति ख०।

‖ पश्यतीति ख-चिह्नितपुस्तके न दृश्यते। एतद्वीजन्तु लिपिकरप्रमाद एव।

** धर्माधर्मेति ग०।

प्रतीतिर्विद्यते एव, तथापि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चा
यकत्वादापातप्रतीतोऽप्यर्थः संशयविपर्ययौ नातिवर्तते। अत
स्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्य—इति चेत्, तथै
धर्मविचारोऽपि कर्तव्य—इति पश्यतु भवान्॥

ननु च, ब्रह्मजिज्ञासा यदेव नियमेन अपेक्षते, तदेव पूर्ववृ
वक्तव्यं, न धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः। अधीतवेदान्तस्य
नधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः। कर्माङ्गाश्रय
ण्युद्गीथाद्युपासनान्यत्रैव चिन्त्यन्ते। तदनधिगतकर्मणो न शव
कर्तुमिति चेत्, अनभिज्ञो हि भवान् शारीरकशास्त्रविज्ञानस्
अस्मिन् शास्त्रे अनाद्यविद्याकृतविविधभेददर्शन*निमित्तजन्मज
मरणादिसांसारिकदुःखसागरनिमग्नस्य निखिलदुःखमूलभू
मिथ्याज्ञान†निबर्हणाय आत्मैकत्वविज्ञानं प्रतिपिपादयिषितम्
अस्य हि भेदावलम्बिकर्मज्ञानं क्वोपयुज्यते, प्रत्युत विरुद्धमेः
उद्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानरूपत्वाविशेषादि
क्रियते। स तु न साक्षात् सङ्गतः। अतो यत्प्रधानं शास्त्रं, त
पेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम्॥

बाढं, तदपेक्षितञ्च कर्मविज्ञानमेव, कर्मसमुच्चितात् ज्ञा नाद
पवर्गश्रुतेः। वक्ष्यति च, सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि ति।
अपेक्षिते च कर्मण्यज्ञाते, केन समुच्चयः केन नेति विभाग ो न
शक्यते ज्ञातुम्। अतस्तदेव पूर्ववृत्तम्॥

---

* तन्निमित्तेति ख०।

† निहरणायेति ख०।

नैतत् युक्तं, सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेव अविद्यानिवृत्तेः। अविद्यानिवृत्तिरेव हि मोक्षः। वर्णाश्रमविशेष-साध्यसाधनेतिकर्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शन-*निवृत्तिरूपाज्ञाननिवृत्तेः कथमिव साधनं भवेत्। श्रुतयश्च कर्मनामनित्यफलत्वेन मोक्षविरोधित्वं, ज्ञानस्यैव मोक्षसाधनत्वञ्च दर्शयन्ति। अन्तवदेवास्य तद्भवति। तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते। ब्रह्मविदाप्नोति परम्। ब्रह्मविद्†ब्रह्मैव भवति। तमेव विदित्वातिमृत्युमेति—इत्याद्याः। यद्यपि चेदमुक्तं, यज्ञादिकर्मापेक्षा विद्येति। तदसद्विरोधात्, श्रुत्यक्षरपर्यालोचनया च अन्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्तावुपयुज्यते, न फलोत्पत्तौ विविदिषन्तीतिश्रव-णात्। विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेव अन्त-रङ्गोपायतां श्रुतिरेवाह। शान्तो दान्त उपरतस्तितिक्षुः समा-हितो भूत्वात्मन्येवात्मानं पश्येदिति। तदेवं जन्मान्तरशता-नुष्ठितानभिसंहितफलविशेषकर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्यां, सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम्। सत्यं ज्ञानमनन्तं ब्रह्म। निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। अयमात्मा ब्रह्म। तत्त्वमसि—इत्यादिवाक्यजन्यज्ञानादेव‡ अविद्या निवर्तते। वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदि-

---

* निवृत्तीति ख०।

† ब्रह्मवेदेति ख०।

‡ ज्ञानाद्धिति ग०।

ध्यासनानि। श्रवणं नाम, वेदान्तवाक्यान्यात्मैकत्वविद्याप्रतिपादकानीति तत्त्वदर्शिन आचार्यान्न्याययुक्तार्थग्रहणम्। एवमाचार्योपदिष्टार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम्। *तद्विरोध्यनादिभेदवासनानिरसनाय अस्यार्थस्य अनवरतभावना† निदिध्यासनम्। एवं ‡श्रवणादिभिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्तयतीत्येवंरूपस्य श्रवणस्य अवश्यापेक्षितमेव पूर्ववृत्तं वक्तव्यम्। तच्च नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसम्पत्, इहामुत्र फलोप§भोगविरागः, मुमुक्षुत्वञ्चेत्येतत्साधनचतुष्टयम्। अनेन विना जिज्ञासानुपपत्तेरर्थस्वभावादेवेदमेव पूर्ववृत्तमिति ज्ञायते। एतदुक्तं भवति ब्रह्मस्वरूपाच्छादिकाविद्यामूल¶मपारमार्थिकं भेददर्शनमेव ब मूलम्। बन्धश्च अपारमार्थिकः। स च समूलोऽपारमार्थिकत्वादे ज्ञानेनैव निवर्त्यते। निवर्तकञ्च ज्ञानं तत्त्वमस्यादिवाक्यजन्यम् तस्यैतस्य वाक्यजन्यज्ञानस्य स्वरूपत‖ उत्पत्तौ कार्ये वा कर्मणा नोपयोगः। विविदिषायामेव तु कर्मणामुपयोगः। स च पापमूल रजस्तमोनिबर्हण**द्वारेण सत्त्ववृद्धा भवतीति—इममुपयोग

---

* एतद्विरोधीति ख०।

† भावनमिति क०।

‡ श्रवणमननादिभिरिति ख०।

§ इहामुत्र च फलभोगविराग—इति ग०।

¶ तन्मलेति ख०।

‖ स्वरूपोत्पत्ताविति क०।

** निर्हरणेति ख०।

मभिप्रेत्य, ब्राह्मणा विविदिषन्तीत्युक्तमिति। अतः कर्मणो ज्ञानस्यानुपयोगादुक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम् ॥

अत्रोच्यते। यदुक्तम्, अविद्यानिवृत्तिरेव मोक्षः, सा च ब्रह्मविज्ञानादेव भवतीति। तदभ्युपगम्यते। अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम्। किं वाक्याद्वाक्यार्थज्ञानमात्रम्, उत तन्मूलमुपासनात्मकं ज्ञानमिति। न तावद्वाक्यजन्यं ज्ञानं, तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः, तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च। न च वाच्यं, भेदवासनायामनिरस्तायां वाक्यमविद्यानिवर्तकं ज्ञानं न जनयति। ज्ञाने* जातेऽपि सर्वस्य सहसैव भेदज्ञानानिवृत्तिर्न दोषाय। चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवत्, अनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवतीति। सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः, सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात्। सत्यपि वाक्यार्थज्ञाने अनादिवासनया भेदज्ञानमनुवर्तत—इति भवता न शक्यते वक्तुं, भेदज्ञानसामग्र्या अपि वासनाया मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात्। ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात् कदाचिदपि नास्या वासनाया निवृत्तिः। वासनाकार्यं भेदज्ञानं छिन्नमूलम्, अथ च अनुवर्तत—इति बालिशभाषितम्। द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादोषस्य ज्ञानबाध्यत्वाभावेन अविनष्टत्वात् मिथ्याज्ञानानु-

* ज्ञान—इति ख-चिह्नितपुस्तके न पश्यते। अत्रापि लिपिकरप्रमाद एव निदानम्।

*वृत्तिर् विरुद्धा। प्रबलप्रमाणबाधितत्वेन भयादिकार्यन्तु निवर्तते। अपिच, भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति। भेदवासनाया अनन्तकालोपचितत्वेन अपरिमितत्वात्, तद्विरोधिभावनायाश्च अल्पत्वादनया तन्निरसनानुपपत्तेः। अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम्। तथाच श्रुतयः, विज्ञाय प्रज्ञां कुर्वीत। अनुविद्य विजानाति। ओमित्येवात्मानं† ध्यायत। निचाय्य तन्मृत्युमुखात्प्रमुच्यते। आत्मानमेव लोकमुपासीत। आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः। सोऽन्वेष्टव्यः। स विजिज्ञासितव्य—इत्येवमाद्याः। अत्र निदिध्यासितव्य—इत्यादिनैकार्थ्यात्। अनुविद्य विजानाति, विज्ञाय प्रज्ञां कुर्वीत—इत्येवमादिभिर्वाक्यार्थज्ञानं ध्यानोपकारकत्वात्। अनुविद्य विज्ञायेत्यनूद्य, प्रज्ञां कुर्वीत विजानातीति ध्यानं विधीयते। श्रोतव्य—इति चानुवादः, स्वाध्यायस्यार्थपरत्वेन अधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात् तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत—इति श्रवणस्य प्राप्तत्वात्। श्रवणप्रतिष्ठार्थत्वान्मननस्य, मन्तव्य—इति चानुवादः। तस्माद्ध्यानमेव विधीयते। वक्ष्यति च, आवृत्तिरसकृदुपदेशादिति॥

तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते। विद्योपास्त्योरव्यतिरेकेण उपक्रमोपसंहारदर्शनात्, मनो

* ज्ञानानिवृत्तिरिति ख०।

† ध्यायथेति ख०।

ब्रह्मेत्युपासीत। तत्र भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन। य एवं वेद, न स वेद। अकृत्स्नो ह्येषः। आत्मेत्येवोपासीत। यस्तद्वेद, यत् स वेद, स मयैतदुक्त—इत्यत्र। अनु म एतां भगवो देवतां शाधि यां* देवतामुपास्से—इति ध्यानञ्च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपध्रुवा स्मृतिः। स्मृतिलम्भे† सर्वग्रन्थीनां विप्रमोक्ष—इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात्। सा च स्मृतिर्दर्शनसमानाकारा,—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।

इत्यनेनैकार्थ्यात्। एवञ्च सति, आत्मा वारे द्रष्टव्य—इत्यनेन निदिध्यासनस्य दर्शनरूपता विधीयते। भवति च स्मृतेर्भावनाप्रकर्षात् दर्शनरूपता। वाक्यकारेणैतत्सर्वं प्रपञ्चितम्। वेदनमुपासनं स्यात् तद्विषये श्रवणादिति। सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम्। सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात् प्रयाजादिवदिति पूर्वपक्षं कृत्वा, सिद्धन्तूपासनशब्दादिति वेदनमसकृदावृत्तं‡ मोक्षसाधनमिति निर्णीतमुपासनं स्यात्। ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्चेति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम्। सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता। दर्शनरूपता च प्रत्यक्षतापत्तिः। एवं

---

* देवतां साधीयां देवतामिति क०। देवतांशाधेयामिति ख०, ग०। आदर्शेषु सर्वत्रैवोपलभ्यमानः पाठभेदो लिपिकरप्रमादकृत—इत्युपेक्षितः।

† लाभ—इति ख०।

‡ आवर्तनमिति ख०, ग०।



प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि। नायमात्मा* प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्—इत्यनेन केवलश्रवणमनननिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा, यमेवैष आत्मा वृणुते तेन लभ्य—इत्युक्तम्। प्रियतम एव हि वरणीयो भवति। यस्यायं निरतिशयप्रियः स एवास्य प्रियतमो भवति। यथायं प्रियतममात्मानं प्राप्नोति, तथा स्वयमेव भगवान् प्रयतत—इति भगवतैव उक्तम्,—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥ इति॥
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥ इति च॥

अतः साक्षात्काररूपा स्मृतिः। स्मर्यमाणात्यर्थप्रियत्वेन स्वयमत्यर्थप्रियो यस्य, स एव परेणात्मना वरणीयो भवतीति तेनैव लभ्यते पर‡ आत्मेत्युक्तं भवति। एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते, उपासनपर्यायत्वाद्भक्तिशब्दस्य। अत एव श्रुतिस्मृतिभिरेवमभिधीयते। तमेव विदित्वा अतिमृत्युमेति। तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते।

नाहं वेदैर्न तपसा न दानेन न चेज्यया।
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन॥

---

* आत्मेति ख-चिह्नितपुस्तके नोपलभ्यते। अथैतत् लिपिकरप्रमादविजृम्भितमिति ज्ञेयम्। एवमन्यत्रापि।

† अनुपायमिति आदर्शेषु सर्वत्रैवोपलभ्यमानः पाठः समीचीनतया न प्रतिभाति। अनुपायत्वमिति युक्तः पाठः।

‡ लभ्यः परमात्मेति ख०।

ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप ।
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥ इति ॥

एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्माणीति, यज्ञादिश्रुतेरश्ववदित्यभिधास्यते। यद्यपि विविदिषन्तीति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते। तथापि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्य आप्रयाणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात् तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि। वक्ष्यति च, आप्रयाणात् तत्रापि हि दृष्टम्। अग्निहोत्रादि* तु तत्कार्यायैव तद्दर्शनात्। सहकारित्वेन चेत्यादिषु। वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह। तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः सम्भवान्निर्वचनाच्चेति। विवेकादीनां स्वरूपञ्चाह। जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेक—इति। अत्र निर्वचनम्, आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिरिति। विमोकः कामानभिष्वङ्ग—इति, शान्त उपासीतेति निर्वचनम्। आरम्भणसंशीलनं पुनः पुनरभ्यास—इति। निर्वचनञ्च स्मार्तमुदाहृतं भाष्यकारेण, सदा तद्भावभावित—इति। पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रियेति। निर्वचनं, क्रियावानेष ब्रह्मविदां वरिष्ठः। तमेतं वेदानुवचनेन ब्राह्मणा

---

* अग्निहोत्रादिस्त्विति क०, ग०।

† निमित्तादुष्टादन्नादिति ग०। पाठोऽयं न समीचीनतामावहति।

‡ कायसिद्धिरिति क०।

विविदिषन्ति, यज्ञेन दानेन तपसानाशकेनेति च। सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानीति। निर्वचनं, सत्येन लभ्यस्तेषामेवैष विरजोब्रह्मलोक—इत्यादि। देशकाल*वैषम्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जन्यं दैन्यमभास्वरत्वं मनसोऽवसाद—इति। तद्विपर्ययोऽनवसादः। निर्वचनं, नायमात्मा बलहीनेन लभ्य—इति। तद्विपर्ययजा तुष्टिरुद्धर्षः, तद्विपर्ययोऽनुद्धर्ष-इति। अतिसन्तोषश्च विरोधीत्यर्थः। निर्वचनमपि, शान्तो दान्त—इति। एवं नियमयुक्तस्याश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति। तथा च श्रुत्यन्तरं, विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं, स ह अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत—इति। अत्र अविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म। अविद्यया कर्मणा मृत्युं ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म तीर्त्वा अपोह्य, विद्यया ज्ञानेनामृतं ब्रह्म अश्नुते† प्राप्नोतीत्यर्थः। मृत्युतरणोपायतया प्रतीताऽविद्या विद्येतरविहितं कर्मैव। यथोक्तम्,

इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया॥ इति॥

ज्ञानविरोधि च कर्म पुण्यपापरूपम्। ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतया उभयोरपि पापशब्दाभिधेयत्वम्। अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण। पापस्य च ज्ञानोदयविरोधित्वम्। एष एवासाधु कर्म

---

* वैगुण्यादिति ग०।

† अश्नुत—इति ख-ग-चिह्नितपुस्तकयोर्नोपलभ्यते।

कारयति, तं यमधो निनीषतीति श्रुत्यावगम्यते। रजस्तमसो-र्यथार्थज्ञानावरणत्वं सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितम्। सत्त्वात् सञ्जायते ज्ञानमित्यादिना। अतश्च ज्ञानोत्पत्तये पापं कर्म्म निरसनीयं, तन्निरसनञ्चानभिसंहितफलेनानुष्ठितेन धर्म्मेण। तथाच श्रुतिः, धर्म्मेण पापमपनुदतीति। तदेवं ब्रह्मप्राप्तिसाधनभूतं ज्ञानं सर्वाश्रम*धर्म्मापेक्षम्। अतोऽपेक्षितं† कर्म्मस्वरूपज्ञानं, केवलकर्म्मणामल्पास्थिर‡फलत्वज्ञानञ्च कर्म्ममीमांसावसेयमिति सैवापेक्षिता ब्रह्ममीमांसायाः पूर्व्ववृत्ता वक्तव्या॥

अपिच, नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न सम्पत्स्यन्ते। फल¶साधनेतिकर्त्तव्यताधिकारिविशेषनिश्चयादृते कर्म्मस्वरूपतत्फल§तत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात्। एषां साधनत्वञ्च विनियोगावसेयम्। विनियोगश्च श्रुतिलिङ्गादिभ्यः, स च तार्त्तीयः। उद्गीथाद्युपासनानि कर्म्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणीति ब्रह्मज्ञानापेक्षाणीतीहैव चिन्तनीयानि। तान्यपि कर्म्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादनानीति तत्साद्गुण्यापादनान्येतानि सुतरामिहैव सङ्गतानि। तेषाञ्च कर्म्मस्वरूपाधिगमापेक्षा सर्वसम्मता। यदप्याहुरशेष-

* कर्म्मापेक्षमिति ख०,।
† अपेक्षितकर्म्मेति ग०।
‡ स्थिरतरफलेति ग०।
¶ फलकरणेति क०, ग०।
§ फलस्थिरत्वास्थिरत्वेति क०, ग०।

विशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थः, तद्*तिरेकि नानाविध-ज्ञातृज्ञेयतत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम्। सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम्। अथ परा यया तदक्षरमधिगम्यते। यत्तदद्रेश्य†मग्राह्यमगोत्र-मवर्णमचक्षुरश्रोत्रं ‡ तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः। सत्यं ज्ञानमनन्तं ब्रह्म।

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्।
यस्यामतं तस्य मतं मतं यस्य न वेद सः।
अविज्ञातं विजानतां विज्ञातमविजानताम्॥

न दृष्टे र्द्रष्टारं¶ पश्ये र्न मते र्मन्तारं मन्वीथाः। आनन्दो ब्रह्म। इदं सर्वं यदयमात्मा। नेह नानास्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति। यत्र हि द्वैतमिव भवति; तदितर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत्, तत् केन कं पश्येत्, तत् केन कं विजानीयात्, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्। यदा § ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति। न स्थानतोऽपि, परस्योभयलिङ्गं सर्वत्र हि। मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्।

---

* तद्व्यतिरेकीति क०।
† तदद्दश्यमिति क०। तदनिर्देश्यमिति ग०।
‡ अचक्षुःश्रोत्रमिति क०, ग०।
¶ पश्येरिति क० ग०—पुस्तकयो र्न पठ्यते।
§ यथेति ग०।

प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरं *।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥
ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥
परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते।
यदेतद् दृश्यते मूर्त्तमेतज्ज्ञानात्मनस्तव ॥
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः।
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ॥
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे।
ये † तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ॥
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर।
तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् ॥
विज्ञानं परमार्थो ‡ हि द्वैतिनोऽतथ्यदर्शिनः।
यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम।
तदैषोऽहमयञ्चान्यो वक्तुमेवमपीष्यते ॥
वेणुरन्ध्रविभेदेन भेदः षड्जादि ¶ संज्ञितः।
अभेदव्यापिनो वायोस्तथासौ परमात्मनः ॥
सोऽहं स च त्वं स च सर्वमेत-
दात्मस्वरूपं त्यज भेदमोहम्।

---

* सत्तामात्रं न गोचरमिति क०।
† एतज्ज्ञानेति ग०।
‡ परमर्थो हीति क०, ग०।
¶ सञ्जातिसंज्ञित इति क०,ग०।

दूतीरितस्तेन स राजवर्य्य-
स्तत्याज भेदं परमार्थदृष्टिः ॥
विभेदजनके ज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥
अहमात्मा गुडाकेश सर्वभूताशयस्थितः।
क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत।
न तदस्ति विना यत् स्यान्मया भूतञ्चराचरम् ॥

इत्यादिभि र्वस्तुस्वरूपोपदेशपरैः शास्त्रै र्निर्विशेषचिन्मात्रं ब्रह्मैव सत्यम्, अन्यत् सर्वं मिथ्या—इत्यभिधानात्। मिथ्यात्वं नाम प्रतीयमानत्व*पूर्व्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम्। यथा रज्ज्वाद्यधिष्ठानकसर्पादेः, दोषवशाद्धि तत्र † तत्कल्पनम्। एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्य्यङ्मनुष्यस्थावरादिभेदं सर्वं जगत् यथावस्थितब्रह्मस्वरूपावबोधबाध्यं मिथ्यारूपम्। दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या, अनृतेन हि प्रत्यूढा, तेषां सत्यानां ‡ सतामनृतमपिधानम्। नासदासीन्नो सदासीत् तदानीं तम आसीत्, तमसा गूढमग्रे प्रकेतम्। मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्। इन्द्रो मायाभिः पुरुरूप ईयते। मम माया दुरत्यया। अनादिमायया सुप्तो यदा

---

* प्रतीयमानरूपत्वपूर्व्वकेति क०, ग०।

† तत्तत्कल्पनमिति क०, ग०।

‡ तेषां सत्यानामनृतमिति क०। तेषां सतामनृतमिति ग०।

जीवः प्रबुध्यते। इत्यादिभि र्निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यती*त्यवगम्यते ॥ यथोक्तम्,—

ज्ञानस्वरूपो भगवान् यतोऽसा-
वशेषमूर्त्ति र्नतु वस्तुभूतः।
ततो हि शैलाब्धिधरादिभेदान्
जानीहि विज्ञानविजृम्भितानि ॥
यदा तु शुद्धं निजरूपि सर्वं
कर्म्मक्षये ज्ञानमपास्तदोषम्।
तदा हि सङ्कल्पतरोः फलानि
भवन्ति नो वस्तुषु वस्तुभेदाः ॥
तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्
क्वचित् कदाचिद् द्विज वस्तुजातम्।
विज्ञानमेकं निजकर्म्मभेद-
विभिन्नचित्तै र्बहुधाभ्युपेतम् ॥
ज्ञानं विशुद्धं विमलं विशोक-
मशेषलोभादिनिरस्तसङ्गम्।
एकं सदेकं परमः परेशः
स वासुदेवो न यतोऽन्यदस्ति ॥
सद्भाव एवं भवतो मयोक्तो
ज्ञानं यथा सत्यमसत्यमन्यत्।

---

* पश्यतीत्यनेन गम्यते—इति ग०।

एतत्तु यत् संव्यवहारभूतं
तत्रापि चोक्तं भुवनाश्रितं ते * ॥ इति ॥

अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति। न पुन र्मृत्यवे तदेकं पश्यति, न पश्यो मृत्युं पश्यति। यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति।

भिद्यते हृदयग्रन्थि श्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे ॥

ब्रह्म वेद ब्रह्मैव भवति। तमेव विदित्वातिमृत्युमेति, नान्यः पन्था अयनाय विद्यते। इत्याद्याः श्रुतयः। अत्र मृत्युशब्देनाविद्याभिधीयते। यथा सनत्सुजातवचनम्,—मोहो वै मृत्युः सम्मतो यः कवीनामिति †। प्रमादं वै मृत्युमहं ब्रवीमि। सदाऽप्रमादममृतत्वं ब्रवीमीति। सत्यं ज्ञानमनन्तं ब्रह्म। विज्ञानमानन्दं ब्रह्म। इत्यादिशोधकवाक्यावसेयनिर्विशेषचिन्मात्रस्वरूपब्रह्मात्मैकत्वविज्ञानञ्च। अथ योऽन्यां देवतामुपास्ते, अन्योऽसावन्योऽहमस्मीति, न स वेद। आत्मेत्येवोपासीत। तत्त्वमसि। त्वञ्चाहमस्मि ‡ भगवो देवते, अहं वै त्वमसि भगवो देवते, तद्योऽहं सोऽसौ, योऽसौ सोऽहम्। इत्यादिवाक्यसिद्धम्। वक्ष्यति चैतदेव, आत्मेति तूपगच्छन्ति ग्राहयन्ति

---

* तदिति क०।

† मोह इत्ययमंशः, गचिह्नितपुस्तके नोपलभ्यते।

‡ त्वं वाहमस्मीति ग०।

चेति । तथा चाह वाक्यकारः । आत्मेत्येव तु गृह्णीयात्, सर्वस्य तन्निष्पत्तेरिति । अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिरुक्ता ॥

ननु च, सकलभेदनिवृत्तिः *प्रत्यक्षविरुद्धा कथमिव शास्त्रार्थजन्यविज्ञानेन क्रियते । कथं वा, रज्जुरेषा न सर्प—इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते । तत्र द्वयोः प्रत्यक्षयो र्विरोधः । इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेति†, तत्तुल्ययोर्विरोधे कथं बाध्यबाधकभावः । पूर्वोत्तरयोर्दुष्टकारणजन्यत्वतदभावाभ्यामिति चेत्, शास्त्रप्रत्यक्षयोरपि समानमेतत् । एतदुक्तं भवति, बाध्यबाधकभावे तुल्यत्वसापेक्षत्वनिरपेक्षत्वादि न कारणं, ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात् । तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते । एवं सति द्वयोः प्रमाणयोर्विरोधे, यत् सम्भाव्यमानान्यथासिद्धं तद्बाध्यम् । अनन्यथासिद्धमनवकाशमितरद्बाधकमिति सर्वत्र बाध्यबाधकभावनिर्णय—इति । तस्मादनादिनिधनाविच्छिन्नसम्प्रदायासम्भाव्यमानदोषगन्धानवकाशशास्त्रजन्यनिर्विशेषनित्य शुद्धमुक्तबुद्धस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन सम्भाव्यमानदोषसावकाशप्रत्यक्षादिसिद्धविविधविकल्परूपबन्धनिवृत्तिर्युक्तैव । सम्भाव्यते च, विविधविकल्पभेदप्रपञ्चग्राहिप्रत्यक्षस्यानादिभेदवासनादिरूपाविद्याख्यो दोषः ॥

---

* सत्यक्षेति ग० ।

† चेत्तुल्ययोरिति ख०, ग० । पाठोऽयं न रमणीयः ।

ननु, अनादिनिधनाविच्छिन्नसम्प्रदायतया निर्दोषस्यापि शास्त्रस्य, ज्योतिष्टोमेन स्वर्गकामो यजेत—इत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत। सत्यम्, पूर्वापरापच्छेदे पूर्वशास्त्रवत् मोक्षशास्त्रस्य निरवकाशत्वात्तेन बाध्यत एव। वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः, निर्गुणत्वात् परस्य ब्रह्मणः॥

ननु च, यः सर्वज्ञः सर्ववित्। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च। सत्यकामः सत्यसङ्कल्प—इत्यादिब्रह्मस्वरूपप्रतिपादनपराणां कथं बाध्यत्वम्। निर्गुणवाक्यसामर्थ्यादिति ब्रूमः। एतदुक्तं भवति। अस्थूलमनण्वह्रस्वम्। सत्यं ज्ञानमनन्तं ब्रह्म। निर्गुणं निरञ्जनम्—इत्यादिवाक्यानि निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्मेति प्रतिपादयन्ति। इतराणि च सगुणम्। उभयविधवाक्यानां विरोधे, तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किञ्चिदवहीनम्*॥

ननु च, सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र ज्ञानादयो गुणाः प्रतीयन्ते। नेत्युच्यते, सामानाधिकरण्येनैकार्थत्वप्रतीतेः। अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्धमिति चेत्, अनभिधानज्ञो हि देवानां प्रियः। एकार्थत्वं नाम सर्वपदानामर्थैक्यम्। विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानामर्थ-

* अपहीनमिति ख०, ग०।

भेदोऽवर्जनीयः *। ततश्चैकार्थत्वं न सिध्यति। एवं तर्हि† सर्वपदानां पर्य्यायता स्यात्, अविशिष्टार्थाभिधायित्वात्। एकार्थाभिधायित्वेऽपि अपर्य्यायत्वमवहितमनाः शृणु, एकत्व-तात्पर्य्यनिश्चयादेकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकपरत्वेन सर्वपदानामर्थवत्त्वमेकार्थत्वमपर्य्यायता च। एतदुक्तं भवति, लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपं, तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते। तत्र सत्य-पदं विकारास्पदत्वेनासत्याद्वस्तुनो व्यावृत्तपरं, ज्ञानपदञ्चा-न्याधीनप्रकाशाज्जड़रूपाद्वस्तुनो व्यावृत्तपरम्, अनन्तपदञ्च देशतः कालतो वस्तुतश्च परिच्छिन्नाद्व्यावृत्तपरम्। न च व्यावृत्ति-र्भावरूपोऽभावरूपो वा धर्म्मः, अपि तु सकलेतरविरोधि ब्रह्मैव। यथा शौक्लादेः कार्ष्ण्यादिव्यावृत्तिः तत्तत्पदार्थ-स्वरूपमेव, न धर्म्मान्तरम्। एवमेकस्यैव वस्तुनः सकलेतर-विरोध्याकारतामवगमयदर्थवत्तरमेकार्थमपर्य्यायञ्च पदत्रय-मिति। तस्मादेकमेव ब्रह्म स्वयंज्योतिर्निर्धूतनिखिल-विशेषमित्युक्तं भवति। एवं वाक्यार्थप्रतिपादने सत्येव, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यादिभिरैका-र्थ्यम्। यतो वा इमानि भूतानि जायन्ते, सदेव सोम्येदमग्र आसीत्, आत्मा वा इदमेक एवाग्र‡ आसीत्—इत्यादिभि-

---

* न वर्ज्जनीय इति ख०।

† एवं तर्हि गुणगुणिनो र्भावेऽपि ऐकार्थ्यं स्यादिति क्वचित्क्कित पुस्तके पठ्यते।

‡ एकमेवाग्र इति ख०।

जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते,—सत्यं ज्ञानमनन्तं ब्रह्मेति। तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्म अवगतम्। जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्तव्यम्। अद्वितीयत्वश्रुति र्गुणतोऽपि सद्वितीयतां न सहते। अन्यथा, निरञ्जनं निर्गुणमित्यादिभिश्च विरोधः। अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति॥

ननु च, सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वेन * लक्षणा स्यात्। नैष दोषः, अभिधानवृत्तेरपि तात्पर्य्यवृत्ते र्बलीयस्त्वात्। सामानाधिकरण्यस्य ह्यैक्य एव तात्पर्य्यमिति सर्वसम्मतम्। ननु च, सर्वपदानां लक्षणा न दृष्टचरी, ततः किं वाक्यतात्पर्य्यविरोधे सत्येकस्यापि न दृष्टा। समभिव्याहृतपदसमुदायस्यैतत्तात्पर्य्यमिति निश्चिते सति, द्वयो स्त्रयाणां सर्वेषां वा तदविरोधायैकस्यैव लक्षणा न दोषाय। तथाच शास्त्रज्ञैरभ्युपगम्यते, कार्य्यवाक्यार्थवादिभि र्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते। अपूर्व्वकार्य्ये एव लिङादे र्मुख्यवृत्तत्वात्, लिङादिभिः † क्रियाकार्य्यं लक्षणया प्रतिपाद्यते। कार्य्यान्वितस्वार्थाभिधायिनाञ्चेतरेषां पदानामपूर्व्वकार्य्या-

* परत्वे—इति ख०, ग०।

† लिङ्गादिभिरिति क०, ग०। (एवं परत्र)।

न्वित एव मुख्योऽर्थ इति क्रियाकार्य्यान्वितप्रतिपादनं लाक्षणिकमेव। अतो वाक्यतात्पर्य्याविरोधाय सर्वपदानां लक्षणापि न दोषः। अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम्॥

प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम्*। सति च विरोधे बलीयस्त्वं वक्तव्यं, विरोध एव न दृश्यते। निर्विशेष†सन्मात्रग्राहित्वात्प्रत्यक्षस्य। ननु च घटोऽस्ति पटोऽस्तीति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते, विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकविज्ञानवदेकव्यवहारहेतुतैव स्यात्। सत्यं, तथैवात्र विविच्यते। कथं घटोऽस्तीत्यत्रास्तित्वं तद्भेदश्च व्यवह्रियते। नच द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं सम्भवति, तयोर्भिन्नकालज्ञानपरत्वात्। प्रत्यक्षज्ञानस्यैकक्षणवर्त्तित्वात्, तत्र स्वरूपं ‡ भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयम्। भेदग्रहणस्य स्वरूपग्रहणतत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयमिति न ¶ भेदः प्रत्यक्षेण गृह्यते। अतो भ्रान्तिमूल एव भेदव्यवहारः। किञ्च, भेदो नाम कश्चित् पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते। भेदस्तावन्न वस्तुनः स्वरूपं, वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत् सर्वस्मात् भेदव्यवहारप्रसक्तेः।

* बलीयस्त्वं वक्तव्यमिति ग०।

† चिन्मात्रग्राहीति ग०। सन्मात्रब्रह्मग्राहीति ख०।

‡ स्वरूपं वेति ग०।

¶ न स भेद इति ख०, ग०।



नच वाच्यं, स्वरूपे गृह्यीतेऽपि भिन्न,—इति व्यवहारस्य प्रतियोगिसव्यपेक्षत्वात् तत्स्मरणाभावेन तदानीमेव न भेदव्यवहार इति, स्वरूपमात्रभेदवादिनो हि प्रतियोगिसव्यपेक्षां च नोत्प्रेक्षितुं क्षमाः, स्वरूपभेदयोः स्वरूपत्वाविशेषात्। यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः, भेदव्यवहारोऽपि तथैव स्यात्। हस्तः कर इतिवत् घटो भिन्न—इति पर्य्यायत्वञ्च स्यात्। नापि धर्म्मः, धर्म्मत्वे सति तस्य स्वरूपात् भेदोऽवश्यमाश्रयणीयः। अन्यथा स्वरूपमेव स्यात्। भेदे च तस्यापि भेदः तद्धर्म्मः तस्यापीत्यनवस्था। किञ्च, जात्यादिधर्म्मविशिष्टवस्तुग्रहणे सति भेदग्रहणं, भेदग्रहणे सति जात्यादिधर्म्मविशिष्टवस्तुग्रहणमित्यन्योऽन्याश्रयणम्। अतो भेदस्यापि दुर्निरूपत्वात् सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम्॥

किञ्च, घटोऽस्ति पटोऽस्ति घटोऽनुभूयते पटोऽनुभूयत-इति सर्वे पदार्थाः सत्तानुभूतिघटिता एव दृश्यन्ते। अत्र सन्मात्रं सर्वासु प्रतिपत्तिष्वनुवर्त्तमानं दृश्यत इति तदेव परमार्थः। विशेषास्तु व्यावर्त्तमानतया अपरमार्थाः रज्जुसर्पादिवत्। यथा रज्जुरधिष्ठानतयाऽनुवर्त्तमाना सती परमार्था, व्यावर्त्तमानाः सर्पभूदलनाम्बुधारादयोऽपरमार्थाः। ननु च, रज्जुसर्पादौ रज्जुरियं न सर्प—इत्यादि रज्ज्वाद्यधिष्ठानयाथार्थ्य*ज्ञानेन बाधितत्वात् सर्पादेरपारमार्थ्यं न व्यावर्त्तमानत्वात्। रज्ज्वादेरपि पारमार्थ्यं नानुवर्त्तमानतया, किन्त्वबाधितत्वात्। अत्र तु अबाधितानां घटादीनां कथमपारमार्थ्यम्। उच्यते, घटादौ दृष्टा व्यावृत्तिः सा किंरूपेति विवेचनीयम्। किं घटोऽस्तीत्यत्र पटाभावः, सिद्धं तर्हि घटोऽस्ती-

* याथात्म्येति क०।

त्वनेन घटादीनां बाधितत्वम्। अतो बाधफलभूता विषयनिवृत्ति-व्यावृत्तिः*। सा व्यावर्त्तमानानामपारमार्थ्यं साधयति। रज्ज्वत् सन्मात्रमबाधितमनुवर्त्तते। तस्मात् सन्मात्रातिरेकि सर्वमपरमार्थम्†। प्रयोगश्च भवति, सन् परमार्थोऽनुवर्त्तमानत्वात् रज्जुसर्पादौ रज्ज्वादिवत्। घटादयोऽपरमार्थाः व्यावर्त्तमानत्वात् रज्ज्वाद्यधिष्ठानसर्पादिवदिति॥

एवं ‡सत्यनुवर्त्तमानानुभूतिरेव परमार्था, सैव सती। ननु च सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम्। नैवं, भेदो हि प्रत्यक्षाविषयत्वाद्दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः। अत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरति। तस्मात् सदनुभूतिरेव, सा च स्वतःसिद्धानुभूतित्वात्। अन्यतः सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः। किञ्चानुभवान्तरापेक्षा चानुभूतेर्न शक्या कल्पयितुं, स्वसत्तयैव प्रकाशमानत्वात्। नह्यनुभूतिर्वर्त्तमाना घटादिवदप्रकाशा दृश्यते, येन परायत्तप्रकाशाभ्युपगम्येत। अथैवं ¶मनुषे, उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासते घटोऽनुभूयत—इति। नहि कश्चिद्घटोऽयमिति जानंस्तदानीमेवाविषयभूतामनिदम्भावामनुभूतिमप्यनुभवति। तस्माद्घटादिप्रकाश§निष्पत्तौ चक्षुरादिकरणसन्निकर्षवदनुभूतिः सद्भाव एव

---

* व्यावृत्तिरिति ख॰ ग॰-पुस्तकयो र्न पठ्यते।

† सन्मात्रातिरेकेण सर्वमपरमार्थमिति ख॰, ग॰।

‡ सत्यनुमानानुभूतिरिति ग॰।

¶ त्वं मनुषे—इति ख॰।

§ प्रकार इति ग॰।

हेतुः। तदनन्तरमर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते। एवं तर्हि, अनुभूतेरजड़ाया अर्थवज्जड़त्वमापद्येत,—इति चेत्, किमिदमजड़त्वं नाम। न तावत् स्वसत्तायाः प्रकाशाव्यभिचारः, सुखादिष्वप्येतत्सम्भवात्। न हि कदाचिदपि सुखादयः सन्तो नोपलभ्यन्ते। अतोऽनुभूतिः स्वयमेव नानुभूयते*, अर्थान्तरं स्पृशतोऽप्यङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति। तदिदमनाकलितानुभवविभवस्य स्वमतिविजृम्भितम्। अनुभूतिव्यतिरेकिणो विषयधर्मस्य प्रकाशस्य रूपादिवदनुपलब्धेः। उभयाभ्युपेतानुभूत्यैवाशेषव्यवहारोपपत्तौ प्रकाशाख्यार्थधर्म†कल्पनानुपपत्तेश्च। अतो नानुभूतिरनुमीयते, नापि ज्ञानान्तरसिद्धा। अपि तु, सर्वं साधयन्त्यनुभूतिः स्वयमेव सिध्यति। प्रयोगश्च, अनुभूतिरनन्याधीनस्वधर्मव्यवहारा स्वसम्बन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात्, यः स्वसम्बन्धादर्थान्तरे तद्धर्मव्यवहारहेतुः स तयोः स्वस्मिन्ननन्याधीनो दृष्टः, यथा रूपादिश्चाक्षुषत्वादौ। रूपादि हि पृथिव्यादौ स्वसम्बन्धाच्चाक्षुषत्वादि जनयन् स्वस्मिन् रूपादिसम्बन्धाधीनचाक्षुषत्वादौ। अतोऽनुभूतिरात्मनः प्रकाशमानत्वे, प्रकाशत—इति व्यवहारे च स्वयमेव हेतुः। सेयं स्वयंप्रकाशानुभूति र्नित्या च प्रागभावाद्यभावात्, तदभावस्य स्वतःसिद्धत्वादेव। नह्यनुभूतेः स्वतःसिद्धायाः प्रागभावः स्वतोऽन्यतो वावगन्तुं शक्यते। अनुभूतिः स्वाभावमवगमयन्ती सती तावन्नावगमयति, तस्याः सत्त्वे विरो-

* नानुमीयते इति ख०।

† प्रकाशाख्यधर्मेति ख०, ग०।

धादेव तदभावो नास्तीति कथं स्वाभावमवगमयति। एवमसत्यपि नावगमयति, अनुभूतिः स्वयमसती कथं स्वाभावे प्रमाणं भवेत्। नाप्यन्यतोऽवगन्तुं शक्यते, अनुभूतेरनन्यगोचरत्वात्। अस्याः प्रागभावं साधयत् प्रमाणमनुभूतिरियमिति विषयीकृत्य तदभावं साधयेत्, स्वतःसिद्धत्वेनेयमिति विषयीकारानर्हत्वात् तत्प्रागभावो नान्यतः शक्यावगमः। अतोऽस्याः प्रागभावाद्यभावादुत्पत्तिर्न शक्यते वक्तुमित्युत्पत्तिप्रति*बन्धाच्चान्येऽपि भावविकारास्तस्या न सन्ति। अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते, व्यापकविरुद्धोपलब्धेः। न ह्यनुत्पन्नं नानाभूतं दृष्टं, भेदादीनामनुभाव्यत्वेन च रूपादेरिवानुभूतिधर्मत्वं न सम्भवति। अतोऽनुभूतेरनुभवस्वरूपत्वादेवान्योऽपि कश्चिदनुभाव्यो नास्या धर्मः, यतो निर्धूतनिखिलभेदा संवित्। अत एव नास्याः स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्तीति स्वप्रकाशरूपा सैवात्मा, अजड़त्वाच्च अनात्मत्वव्याप्तं जड़त्वं संविदि व्यावर्त्तमानमनात्मत्वमपि हि संविदो व्यावर्त्तयति॥

ननु चाहं जानामीति ज्ञातृता प्रतीतिसिद्धा, मैवं, सा भ्रान्तिसिद्धा रजततेव शुक्तिशकलस्य, अनुभूतेः स्वात्मनि कर्तृत्वायोगात्। अतो † मनुष्योऽहमित्यत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवत् ‡ज्ञातृत्वमप्यध्यस्तम्। ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वं,

---

* बन्धात्सान्य—इति ख०, ग०।

† ततो मनुष्योऽहमित्यन्तर्भूतेति ग०।

‡ ज्ञातृत्वाद्यध्यस्तमिति ख०।

तच्च विक्रियात्मकं जड़ं विकारिद्रव्याहङ्कारग्रन्थिस्थमविक्रिये साक्षिणि चिन्मात्रात्मनि कथमिव सम्भवति। दृश्याधीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादे र्नात्मधर्म्मत्वं, सुषुप्तिमूर्च्छादावहंप्रत्ययाभावेऽप्यात्मानुभवदर्शनेन नात्मनोऽहंप्रत्ययगोचरत्वम्। कर्तृत्वेऽहंप्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येव जड़त्वपराक्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः। अहंप्रत्ययगोचरात्कर्तृतया प्रसिद्धाद्देहात् *क्रियाफलस्य स्वर्गादे र्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव। तथाहमर्थात् ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम्†। एवमविक्रियानुभवस्वरूपस्यैवाभिव्यञ्जको जड़ोऽप्यहङ्कारः स्वाश्रयतया तमभिव्यनक्ति। आत्मस्थतयाभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां‡ स्वभावः, दर्पणजलखण्डादिर्हि मुखचन्द्रबिम्बगोत्वादिकमात्मस्थतयाभिव्यनक्ति, तत्कृतोऽयं जानाम्यहमिति भ्रमः। स्वप्रकाशाया अनुभूतेः कथमिव तदभिव्यङ्ग्यजड़रूपाहङ्कारेणाभिव्यङ्ग्यत्वमिति मा वोचः, रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वोप¶दर्शनात्। जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्येनापि करतलेन स्फुटतरप्रकाशो हि दृष्टचरः। यतोऽहं जानामीति ज्ञातायमहमर्थः चिन्मात्रात्मनो न पारमार्थिको धर्म्मः, अत एव सुषुप्तिमुक्त्योर्नान्वेति, तत्र §ह्यहमुल्लेखविगमेन स्वाभाविकानुभवमात्र-

* तत्तत्क्रियेति ख०।

† वक्तव्यमिति ग०।

‡ आत्मस्थतयाभिव्यञ्जनमिति ख०।

¶ तदभिव्यञ्जकत्वदर्शनादिति ख०।

§ तत्राहमुल्लेखेति ख०।

रूपेणात्मावभासते। अत एव *सुप्तोत्थितः कदाचिन्मामप्यहं न ज्ञातवानिति परामृशति। तस्मात् परमार्थतो निरस्तसमस्तभेद-विकल्पनिर्विशेषचिन्मात्रैकरसकूटस्थनित्यसंविदेव भ्रान्त्या ज्ञातृ-ज्ञेयज्ञानरूपविविधविचित्रभेदा† विवर्त्तत—इति तन्मूलभूताविद्यानिवर्हणाय नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त—इति ॥

तदिदमौपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहिणामनादिपापवासनादूषिताशेषशेमुषीकाणामनधिगतपदवाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादिसकलप्रमाणवृत्ततदितिकर्त्तव्यतारूपसमीचीनन्यायमार्गाणां विकल्पासहविविधकुतर्क‡कल्ककल्पितमिति न्यायानुगृहीतवाक्यप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरनादरणीयम्। तथाहि निर्विशेषवादिभि र्निर्विशेषवस्तुनीदं प्रमाणमिति न शक्यते वक्तुं, सविशेषवस्तुविषयत्वात् सर्वप्रमाणानाम् ॥

यत्तु, स्वानुभवसिद्धमिति स्वगोष्ठीनिष्ठः समयः, सोऽप्यात्मसाक्षिकसविशेषादेव निरस्तः, इदमहमदर्शमिति केनचिद्विशेषेण विशिष्टविषयत्वात् सर्वेषामनुभवानाम्। सविशेषोऽप्यनुभूयमानोऽनुभवः केनचिद् युक्त्याभासेन निर्विशेष—इति निष्कृष्यमाणः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषै निष्कृष्टव्य

* सुषुप्तोत्थित इति ख०।

† भेदादिर्विवर्त्तत इति, क० ख०।

‡ कल्पे ति ख०, ग०।

—इति निष्कर्ष*हेतुभूतैः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैः सविशेष एवावतिष्ठते। अतः कैश्चिद्विशेषैर्विशिष्टस्यैव वस्तुनोऽन्ये विशेषा निरस्यन्त—इति न क्वचिन्निर्विशेषवस्तुसिद्धिः। धियो हि धीत्वं, स्वयंप्रकाशता च, ज्ञातु र्विषयप्रकाशनस्वभावतयोपलब्धेः, स्वापमदमूर्च्छासु च सविशेष एवानुभव—इति स्वावसरे निपुणतरमुपपादयिष्यामः॥

स्वाभ्युपगताश्च नित्यत्वादयो ह्यनेकविशेषाः सन्त्येव, ते च न वस्तुमात्रमिति शक्योपपादनाः, वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनात् स्वाभिमततद्विधाभेदैश्च स्वमतोपपादनात्, अतः प्रामाणिकविशेषै र्विशिष्टमेव वस्त्विति वक्तव्यम्। शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यं पदवाक्यरूपेण प्रवृत्तेः। प्रकृतिप्रत्यययोगेन† हि पदत्वम्, प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्ज्जनीयम्। पदभेदश्चार्थभेदनिबन्धनः, पदसङ्घातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन‡ निर्विशेषवस्तुप्रतिपादनासामर्थ्यात् न निर्विशेषवस्तुनि शब्दः प्रमाणम्॥

प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः, सविकल्पकं जात्याद्यनेकपदार्थविशिष्टविषयत्वादेव सविशेषविषयम्। निर्विकल्पकमपि सविशेषविषयमेव, सविकल्पके स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसन्धानहेतुत्वात्।

---

* निष्कर्षकेति क०, ग०।

† योगेनैवेति ख०।

‡ विशेषविधायित्वेनेति क०, ग०।

निर्विकल्पकं नाम केनचिद्विशेषेण वियुक्तस्य ग्रहणं, न सर्वविशेषरहितस्य, तथाभूतस्य कदाचिदपि ग्रहणादर्शनात्, अनुपपत्तेश्च केनचिद्विशेषेण इदमित्थमिति सर्वा प्रतीतिरुपजायते। त्रिकोणसास्नादिसंस्थानविशेषेण विना कस्यचिदपि पदार्थस्य ग्रहणायोगात्। अतो निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणं, द्वितीयादिपिण्डग्रहणं सविकल्पकमित्युच्यते। तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारता न प्रतीयते, द्वितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः, प्रथमप्रतीत्यनुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिधर्मविशिष्टत्वं द्वितीयादिपिण्डग्रहणावसेयमिति द्वितीयादिग्रहणस्य सविकल्पकत्वं, सास्नादि*वस्तुसंस्थानरूपगोत्वादेरनुवृत्तिः न प्रथमपिण्डग्रहणे गृह्यत—इति प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम्। न पुनः संस्थानरूपजात्यादेरग्रहणात्, संस्थानरूपजात्यादेरपि ऐन्द्रियकत्वाविशेषात्। संस्थानेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च प्रथमपिण्डग्रहणेऽपि ससंस्थानमेव वस्त्वित्थमिति गृह्यते†। अतो द्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्तिधर्मविशिष्टता संस्थानवत् संस्थानिवच्च सर्वदैव गृह्यत—इति तेषु सविकल्पकत्वमेव। अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम्। अत एव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम्। इदमित्थमिति प्रतीताविदमित्थंभावयोरैक्यं कथमिव प्रत्येतुं शक्यते। अत्रेत्थंभावः सास्नादिसंस्थानविशेषस्तद्विशिष्टं द्रव्यमिदमंश—इत्यनयोरैक्यं प्रतीतिपराहत-

---

* सास्नादिमद्वस्त्विति क०।

† न गृह्यत—इति क०, ख०।

मेव। तथाहि, प्रथममेव वस्तु प्रतीयमानं सकलेतरव्यावृत्तमेव प्रतीयते, व्यावृत्तिश्च गोत्वादिसंस्थानविशेषविशिष्टतया इदमित्थमिति प्रतीतेः। सर्वत्र विशेषणविशेष्यभावप्रतिपत्तौ तयोरत्यन्तभेदः प्रतीत्यैव सुव्यक्तः, तत्र दण्डकुण्डलादयः पृथक्संस्थानसंस्थिताः स्वनिष्ठाश्च कदाचित् क्वचिद् द्रव्यान्तरविशेषणतयावतिष्ठन्ते, गोत्वादयस्तु द्रव्यसंस्थानतयैव पदार्थभूताः सन्तो द्रव्यविशेषणतयावस्थिताः। उभयत्र विशेषणविशेष्यभावः समानः, अत एव तयो र्भेदप्रतिपत्तिश्च। इयांस्तु विशेषः, पृथक्सिद्धि*प्रतिपत्तियोग्या दण्डादयः, गोत्वादयस्तु नियमेन तदनर्हा-इति, अतो वस्तुविरोधः प्रतीतिपराहत—इति प्रतीतिप्रकारनिरूपणादेवोच्यते, प्रतीतिप्रकारो हि इदमित्थमित्येव† सर्वसम्मतः। तदेतत् सूत्रकारेण, नैकस्मिन्नसम्भवादिति सुव्यक्तमुपपादितम्। अतः प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्टसम्बन्धविशिष्ट‡विषयत्वादनुमानमपि सविशेषविषयमेव, प्रमाणसंख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषय—इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः। वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेषमिति वदन् जननीवन्ध्यात्वप्रतिज्ञावत्§ स्ववाग्विरोधित्वमपि न जानाति॥

यत्तु, प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयं, भेदश्च विकल्पा-

---

* पृथक्स्थितिप्रतिपत्तीति ग०।

† एवमिति क०।

‡ विशिष्टत्वादनुमानमिति ख०।

§ प्रतिज्ञायामिवेति ग०।

सहत्वात् दुर्निरूप—इत्युक्तम्। तदपि जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वात् जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम्। संवेदनवद्रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि सम्भवत्येव। अत एव नानवस्थान्योन्याश्रयणञ्च। एकक्षणवर्तित्वेऽपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानगोत्वादेर्गृहीतत्वात् क्षणान्तरग्राह्यं न किञ्चिदिह तिष्ठति॥

अपि च, सन्मात्रग्राहित्वे घटोऽस्ति पटोऽस्तीति विशिष्टविषया प्रतिपत्तिर्विरुध्यते। यदि च, सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो भेदः प्रत्यक्षेण न गृहीतः, किमित्यश्वार्थी महिषदर्शनेन निवर्तते। सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत्, तत्प्रतिपत्तिविषयसहचारिणः सर्वे शब्दा एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते। किञ्च, अश्वे हस्तिनि च संवेदनयोरेकविषयत्वेनोपरितनस्य गृहीतग्राहित्वात् विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात्*। प्रतिसंवेदनं विशेषाभ्युपगमे प्रत्यक्षस्य विशिष्टार्थविषयत्वमेवाभ्युपगतं भवति। सर्वेषां संवेदनानामेकविषयतायामेकेनैव संवेदनेनाशेषग्रहणादन्धबधिराद्यभावश्च प्रसज्येत॥

न च, चक्षुषा सन्मात्रं गृह्यते। तस्य रूपरूपिरूपैकार्थसमवेतपदार्थग्राहित्वात्। नापि त्वचा स्पर्शवद्वस्तुविषयत्वात्। श्रोत्रादीन्यपि न सन्मात्रविषयाणि, किन्तु शब्दरसगन्धलक्षणविशेष-

---

* वैलक्षण्याभावादिति ग०। पाठोऽयं न साधुतरः।

विषयाण्येव । अतः सन्मात्रस्य च ग्राहकं न किञ्चिदिह दृश्यते। निर्विशेषसन्मात्रस्य च प्रत्यक्षेणैव ग्रहणे तद्विषयागमस्य प्राप्तविषयत्वेनानुवादकत्वमेव स्यात्, सन्मात्रब्रह्मणः प्रमेयभावश्च*। ततो जड़त्वनाशित्वादयस्त्वयैवोक्ताः। अतो वस्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्टविषयमेव प्रत्यक्षम्। संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात् तावतैव गोत्वादिजातिव्यवहारोपपत्तेरतिरेकवादेऽपि संस्थानस्य सम्प्रतिपन्नत्वाच्च संस्थानमेव जातिः। संस्थानं नाम स्वासाधारणरूपमिति यथावस्तु संस्थानमनुसन्धेयम्। जातिग्रहणेनैव भिन्न—इति व्यवहारसम्भवात् †पदार्थान्तरादर्शनादर्थान्तरवादिनाप्यभ्युपगतत्वाच्च गोत्वादिरेव भेदः। ननु च, जात्यादिरेव भेदश्चेत्, तस्मिन् गृहीते तद्व्यवहारवत्‡ भेदव्यवहारोऽपि स्यात्। सत्यं, भेदश्च व्यवह्रियत एव, गोत्वादिव्यवहारात्। गोत्वादिरेव हि सकलेतरस्य व्यावृत्तिः, गोत्वादौ गृहीते सकलेतरसजातीयबुद्धिव्यवहारयोर्निवृत्तेः। भेदग्रहणेनैव ह्यभेदनिवृत्तिः। अयमस्माद्भिन्न—इति तु व्यवहारे प्रतियोगिनिर्देशस्य तदपेक्षत्वात् प्रतियोग्यपेक्षया भिन्न—इति व्यवहार—इत्युक्तम्॥

यत् पुनः, घटादीनां विशेषाणां व्यावर्तमानत्वेनापारमार्थ्यमुक्तं, तदनालोचितबाध्यबाधकभावव्यावृत्त्यनुवृत्तिविशेषस्य

---

* प्रमेयभावश्चेदिति ख०।

† पदार्थान्तरवादिनाभ्युपगन्तव्यत्वाच्चेति ख०।

‡ व्यवहारादिति ग०।

भ्रान्ति*प्रकल्पितम् । द्वयो र्ज्ञानयोर्हि विरोधे बाध्यबाधकभावो, बाधितस्यैव व्यावृत्तिः । अत्र घटपटादिषु देशकालभेदेन विरोध एव नास्ति, यस्मिन् देशे यस्मिन् काले यस्य सद्भावः प्रतिपन्नस्तस्मिन् देशे तस्मिन् काले तस्याभावः प्रतिपन्नश्चेत्, तत्र विरोधाद्बलवतो बाधकत्वम्, बाधितस्य च† निवृत्तिः । देशान्तरकालान्तरसम्बन्धितयानुभूतस्यान्यदेशकालयोरभावप्रतीतौ न विरोध—इति कथमत्र बाध्यबाधकभावः, अन्यत्र निवृत्तस्यान्यत्र‡ निवृत्तिर्वा कथमुच्यते । रज्जुसर्पादिषु तु तद्देशकालसम्बन्धितयैवाभावप्रतीते विरोधो बाधकत्वं व्यावृत्तिश्चेति, देशकालान्तरदृष्टस्य देशकालान्तरव्यावर्त्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टमिति न व्यावर्त्तमानत्वमात्रमपारमार्थ्ये¶ हेतुः ॥

यत्तु, अनुवर्त्तमानत्वात् सत्परमार्थ—इति तत् सिद्धमेवेति न साधनमर्हति, अतो न सन्मात्रमेव वस्तु, अनुभूतिसद्विशेषयोश्च§ विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वादबाधितत्वाच्च अनुभूतिरेव सतीत्येतदपि निरस्तम् ॥

यत्तु, अनुभूतेः स्वयंप्रकाशत्वमुक्तं, तद्विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तदैव‖, न तु सर्वेषां सर्वदा तथैवेति नियमोऽस्ति ।

---

* परिकल्पितमिति ख०, ग० ।

† तन्निवृत्तिरिति ख० ।

‡ अन्यत्र देशान्तरे निवृत्तिरिति ख० ।

¶ अपारमार्थ्यहेतुरिति ग० ।

§ अनुभूतितद्विषययोश्चेति ग० ।

‖ तथैवेति ख०, ग० ।

परिमितोदारगुणसागरानवधिकातिशयानन्दस्वरूपे ब्रह्मणि समन्वितानां प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादन्यपरत्वं, स्वविषयावबोधपर्यवसायित्वात् सर्वप्रमाणानाम्। न च प्रयोजनानुगुणा प्रमाणप्रवृत्तिः*। प्रयोजनं हि प्रमाणानुगुणम्। न च प्रवृत्ति निवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वं, पुरुषार्थान्वयप्रतीतेः। तथा, स्वरूपपरेष्वपि, पुत्रस्ते जातो, नायं सर्प इत्यादिषु हर्षभयनिवृत्तिरूपप्रयोजनवत्त्वं दृष्टम्॥

अत्राह—न वेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति। प्रवृत्तिनिवृत्त्यन्वयविरहिणः शास्त्रस्यानर्थक्यात्। यद्यपि प्रत्यक्षादीनि वस्तुयाथात्म्यावबोधे पर्यवस्यन्ति, तथापि शास्त्रं प्रयोजनपर्यवसाय्येव। नहि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वाक्यस्य प्रयोग उपलब्धचरः†। न च, किञ्चित्प्रयोजनमनुद्दिश्य वाक्यप्रयोगः श्रवणं वा सम्भवति। तच्च प्रयोजनं प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमुपलब्धम्। अर्थार्थी राजकुलं गच्छेत्। मन्दाग्निर्नाम्बु पिबेत्। स्वर्गकामो यजेत। न कलञ्जं भक्षयेदित्यादिषु॥

---

'समन्वयः'। तस्मात् पुरुषार्थत्वेनाभिधेयतया अन्वयात् 'तत्' पूर्वसूत्रोदितं ब्रह्मणः शास्त्रयोनित्वमुपपन्नतरमिति निरवद्यं निखिलजगदेककारणं स्वरूपेण गुणैर्विभूत्या वा अनवधिकातिशयानन्दरूपं परं ब्रह्म वेदान्ताः वेदकतया प्रतिपादयन्त्येवेति स्थिरीकृतम्॥ ४॥

---

* अन्यपरत्वमित्यादिः प्रमाणप्रवृत्तिरित्यन्तः सन्दर्भः ग-पुस्तके पतित इति ज्ञेयम्।

† अनुपलब्धचर इति सन्दर्भविरुद्धं पठति ख-पुस्तकम्।

यत्पुनः, सिद्धवस्तुपरेष्वपि, पुत्रस्ते जातो, नायं सर्पो, रज्जुरेषेत्यादिषु हर्षभयादिनिवृत्तिरूपपुरुषार्थान्वयो दृष्ट इत्युक्तम्। तत्र, किं पुत्रजन्माद्यर्थात् पुरुषार्थावाप्तिः, उत तज्ज्ञानादिति विवेचनीयम्। सतोऽप्यर्थस्याज्ञातस्यापुरुषार्थत्वेन तज्ज्ञानादिति चेत्, तर्ह्यसत्यप्यर्थे ज्ञानादेव पुरुषार्थः * सिध्यतीत्यर्थपरत्वाभावेन प्रयोजनपर्यवसायिनोऽपि शास्त्रस्य नार्थसद्भावे प्रामाण्यम् †। तस्मात् सर्वत्र प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा ‡ प्रयोजनपर्यवसानमिति कस्यापि¶ वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्यासम्भवात् न वेदान्ताः परिनिष्पन्नं ब्रह्म प्रतिपादयन्ति ॥

अत्र कश्चिदाह—वेदान्तवाक्यान्यपि कार्यपरतयैव ब्रह्मणि प्रमाणभावमनुभवन्ति। कथं निष्प्रपञ्चमद्वितीयं ज्ञानैकरसं ब्रह्म अनाद्यविद्यया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चं कुर्यादिति। ब्रह्मणः प्रपञ्चविलयद्वारेण विधिविषयत्वमिति कोऽसौ द्रष्टृ§दृश्यरूपप्रपञ्चविलयद्वारेण साध्यज्ञानैकरसब्रह्मविषयो विधिः, न दृष्टेर्द्रष्टारं पश्येः, न मतेर्मन्तारं मन्वीथा

---

* पुरुषार्थसिद्धादिति ख०। अपपाठोऽयम्।

† प्राबल्यमिति ख०। असमीचीनमेतत्।

‡ प्रयोजनपर्यवसायिनोऽपीत्यादिर्ज्ञानपरत्वेन वेत्यन्तः सन्दर्भः ग-पुस्तके लिपिकरप्रमादात् पतित इति ज्ञेयम्।

¶ तस्यापीति ख०, ग०।

§ दृष्टेति ख०। अयुक्तमेतत्।

इत्येवमादिः। द्रष्टृदृश्यभेदशून्यं दृशिमात्रं ब्रह्म कुर्यादित्यर्थः। स्वतःसिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण साध्यत्वमविरुद्धमिति॥

तदयुक्तम्। नियोग*वाक्यार्थवादिना हि नियोगो, नियोज्यविशेषणं, विषयः, करणम्, इतिकर्तव्यता, प्रयोक्ता च वक्तव्याः†। तत्र हि ‡नियोज्यविशेषणमनुपादेयम्। तच्च निमित्तं, फलमिति द्विधा। अत्र किं नियोज्यविशेषणम्। तच्च किं निमित्तं, फलं वेति विवेचनीयम्। ब्रह्मस्वरूपयाथात्म्यानुभव इति चेत्¶, तर्हि न तन्निमित्तं, जीवनादिवदस्यासिद्धत्वात्। निमित्तत्वे च तस्य नित्यत्वेनापवर्गोत्तरकालमपि जीवननिमित्ताग्निहोत्रादिवन्नित्यं तद्विषयानुष्ठानप्रसङ्गः। नापि फलं, नैयोगिकफलत्वेन स्वर्गादिवदनित्यत्वप्रसङ्गात्। कश्चात्र नियोगविषयः। ब्रह्मैवेति चेत्, न। तस्य नित्यत्वेनाभव्यरूपत्वात्। अभावार्थत्वाच्च निष्प्रपञ्चं ब्रह्म साध्यमिति चेत्, साध्यत्वेऽपि फलत्वमेव। अभावार्थत्वान्न विधिविषयत्वम्। साध्यत्वञ्च कस्य। किं ब्रह्मण, उत प्रपञ्चनिवृत्तेः। न तावद्ब्रह्मणः, सिद्धत्वादनित्यत्वप्रसक्तेश्च। अथ प्रपञ्चनिवृत्तेः, न तर्हि ब्रह्मणः साध्यत्वम्। प्रपञ्चनिवृत्तिरेव विधिविषय इति चेत्, न। तस्याः फलत्वेन विधिविषयत्वायोगात्। प्रपञ्चनिवृत्ति-

---

* विनियोगेति ख०।

† इतिकर्तव्यता प्रयोक्त्रेति ख०।

‡ प्रयोज्यविशेषणमिति ग०।

¶ —याथात्म्यानुभवस्वेन्नियोज्यविशेषणमिति ग०।

रेव हि मोक्षः। स च फलम्। अस्य च नियोगविषयत्वे, नियोगात् प्रपञ्चनिवृत्तिः, प्रपञ्चनिवृत्त्या नियोग इतीतरेतराश्रयत्वम्॥

अपि च, किं निवर्तनीयः प्रपञ्चो मिथ्यारूपः, सत्यो वा। मिथ्यारूपत्वे ज्ञाननिवर्त्यत्वादेव नियोगेन* न किञ्चित् प्रयोजनम्। नियोगस्तु निवर्तकज्ञानमुत्पाद्य तद्द्वारेण प्रपञ्चस्य निवर्तक इति चेत्, तत् स्ववाक्यादेव जातमिति न नियोगेन प्रयोजनम्। वाक्यार्थज्ञानादेव ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्याभूतस्य प्रपञ्चस्य बाधितत्वात्, सपरिकरस्य नियोगस्यासिद्धिश्च†। प्रपञ्चस्य निवर्तको नियोगः किं ब्रह्मस्वरूपमेव, उत तद्व्यतिरिक्तः। यदि ब्रह्मस्वरूपमेव निवर्तकं, नित्यतया‡ निवर्त्यप्रपञ्चसद्भाव एव न सम्भवति। नित्यत्वेन¶ च नियोगस्य विषयानुष्ठानसाध्यत्वञ्च न घटते। अथ ब्रह्मस्वरूपव्यतिरिक्तः, तस्य कृत्स्नप्रपञ्च§निवृत्तिरूपविषयानुष्ठानसाध्यत्वेन प्रयोक्ता च न दृष्ट‖ इत्याश्रयाभावादसिद्धिः। प्रपञ्चनिवृत्तिरूपविषयानुष्ठानेनैव ब्रह्मस्वरूपव्यतिरिक्तस्य कृत्स्नस्य निवृत्तत्वात्, न नियोगनिष्पाद्यं मोक्षाख्यं फलम्॥

---

* नियोगत्वेनेति ग०।

† असिद्धेश्चेति ग०।

‡ निवर्तकनित्यतयेति ख०, ग०। पाठोऽयं नास्मभ्यं रोचते।

¶ नित्यत्वे चेति ग०।

§ प्रपञ्चत्वेति ग०।

‖ प्रयोक्ता च नष्ट इति ख०। अयुक्तमेतत्।

किञ्च, *प्रपञ्चनिवृत्तेर्नियोगकरणस्येतिकर्तव्यताभावादनुपकृतस्य च †करणत्वायोगात् न करणत्वम्। कथमितिकर्तव्यताभाव इति चेत्, इत्थमस्येतिकर्तव्यता भावरूपा, अभावरूपा वा ‡। भावरूपा च करणशरीरनिष्पत्तितदनुग्रहकार्यभेदभिन्ना। उभयविधा च न सम्भवति। न हि मुद्गराभिघातादिवत् कृत्स्नप्रपञ्चनिवर्तकः कोऽपि दृश्यत इति दृष्टार्थो न सम्भवति। नापि निष्पन्नस्य करणस्य कार्योत्पत्तावनुग्रहः सम्भवति। अनुग्राह्यकांशसद्भावेन कृत्स्नप्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः। ब्रह्मणोऽद्वितीयत्वज्ञानं प्रपञ्चनिवृत्तिरूपकरणशरीरं निष्पादयतीति चेत्, तेनैव प्रपञ्चनिवृत्तिरूपो मोक्षः सिद्ध इति न करणादिनिष्पाद्यमवशिष्यत इति पूर्वमेवोक्तम्। अभावरूपत्वे चाभावत्वादेव¶ न करणशरीरं निष्पादयति। नाप्यनुग्रहणम्। अतो निष्प्रपञ्चब्रह्मविषयो विधिर्न सम्भवति॥

अन्योऽप्याह—यद्यपि वेदान्तवाक्यानां न परिनिष्पन्नब्रह्मस्वरूपपरतया प्रामाण्यं, तथापि ब्रह्मस्वरूपं सिध्यत्येव। कुतः, ध्यानविधिसामर्थ्यात्। एवमेव हि § समामनन्ति। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः। य आत्माऽ-

* प्रसक्तेरिति ग०। असमीचीनमेतत्।

† अनुपकरणत्वायोगादिति ख०। लिपिकरप्रमाद एवात्र बीजम्।

‡ अभावरूपा वेति पाठः ख-पुस्तके पतित इत्यवधेयम्।

¶ अभावादेवेति ख०। असमीचीनमेतत्।

§ एवमेव समामनन्तीति ग०।

पहतपाप्मा । सोऽन्वेष्टव्यः स विजिज्ञासितव्यः । आत्मेत्ये-वोपासीत । आत्मानमेव लोकमुपासीतेति । अत्र ध्यानविषयी हि नियोगः*, स्वविषयभूतं ध्यानं ध्येयैकनिरूपणीयमिति ध्येयमाक्षिपति । स च ध्येयः स्ववाक्यनिर्दिष्ट आत्मा । स किंरूप इत्यपेक्षायां तत्स्वरूपविशेषसमर्पणद्वारेण, सत्यं ज्ञान-मनन्तं ब्रह्म, सदेव सोम्येदमग्र आसीत्, †एकमेवाद्वितीय-मित्येवमादीनां वाक्यानां ध्यानविधिशेषतया ‡ प्रामाण्य-मिति विधिविषयभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपेऽपि तात्-पर्यमस्त्येव । अत एकमेवाद्वितीयं, तत् सत्यं, स आत्मा, नेह नानास्ति किञ्च नेत्येवमादिभिर्ब्रह्मस्वरूपमेकमेव सत्यं, तद्व्यति-रिक्तं सर्वं मिथ्येत्यवगम्यते ॥

प्रत्यक्षादिभिर्भेदावलम्बिना¶ च कर्मशास्त्रेण भेदः प्रती-यते । भेदाभेदयोः परस्परविरोधे सति, अनाद्यविद्यामूलत्वेनापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इति निश्चीयते । तत्र, ब्रह्मध्याननियोगेन तत्साक्षात्कारफलेन निरस्तसमस्ताविद्या-कृतविविधभेदाद्वितीयज्ञानैकरसब्रह्मभावरूपो मोक्षः प्राप्यते । न च, वाक्यार्थज्ञानमात्रेण § ब्रह्मभावसिद्धिः, अनुपलब्धे-

---

* स्वविषययोग इत्यधिकं पठ्यते ख-पुस्तके ।

† एकमेवाद्वितीयमिति ग-पुस्तके नोपलभ्यते ।

‡ ध्यानविधिविशेषणतयेति ख० ।

¶ ब्रह्मभेदावलम्बिनेति ग० ।

§ वाक्याद्वाक्यार्थज्ञानमात्रेणेति ग० ।



विविधभेददर्शनानुवृत्तेश्च। तथा सति, श्रवणादिविधानमनर्थकं स्यात् ॥

अथोच्येत—रज्जुरेषा न सर्प इत्युपदेशेन सर्पभयनिवृत्तिदर्शनात्, रज्जुसर्पवत् बन्धस्य च मिथ्यारूपत्वेन ज्ञानबाध्यतया तस्य वाक्यजन्यज्ञानेनैव निवृत्तिर्युक्ता, न नियोगेन। नियोगसाध्यत्वे मोक्षस्यानित्यत्वं स्यात्, स्वर्गादिवत्। मोक्षस्य नित्यत्वं हि सर्ववादिसम्प्रतिपन्नम् ॥

किञ्च, धर्माधर्मयोः फलहेतुत्वं स्वफलानुभवानुगुण*शरीरोत्पादनद्वारेणेति ब्रह्मादिस्थावरान्तचतुर्विधशरीरसम्बन्धरूपसंसारफलत्वमवर्जनीयम्। तस्मान्न धर्मसाध्यो मोक्षः। तथा च श्रुतिः, न ह वै सशरीरस्य† सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इत्यशरीरत्वरूपे मोक्षे धर्माधर्मसाध्यप्रियाप्रियविरहश्रवणात्, न धर्मसाध्यमशरीरत्वमिति विज्ञायते‡। न च नियोगविशेषसाध्यफलविशेषवत् ध्याननियोगसाध्यमशरीरत्वम्, अशरीरत्वस्य स्वरूपत्वेनासाध्यत्वात्। यथाहुः श्रुतयः—

अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥

---

* सकलानुभवानुभवानुगुणेति ग०। अशुद्धमेतत्।

† शरीरस्य सत इति ग०। अपपाठोऽयम्।

‡ ज्ञायत इति ख०, ग०।

अप्राणो ह्यमनाः शुभ्रोऽसङ्गो ह्ययं पुरुष * इत्याद्याः। अतोऽशरीरत्वरूपो मोक्षो नित्य इति न धर्माधर्मसाध्यः। तथा च श्रुतिः †, अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्, अन्यत्र भूतात् भव्याच्च यत् पश्यसि तद्वदेति ‡॥

अपि च, उत्पत्तिप्राप्तिविकृतिसंस्कृतिरूपेण चतुर्विधं हि साध्यत्वं मोक्षस्य न सम्भवति। न तावदुत्पाद्यः, मोक्षस्य ब्रह्मस्वरूपत्वेन नित्यत्वात्। नापि प्राप्यः, आत्मस्वरूपत्वेन ब्रह्मणो नित्यप्राप्तत्वात्। नापि विकार्यः, दध्यादिवदनित्यत्वप्रसङ्गात्। नापि संस्कार्यः, संस्कारो हि दोषापनयनेन वा गुणाधानेन वा साधयति। न तावद्दोषापनयनेन, नित्यशुद्धत्वात् ब्रह्मणः। नाप्यतिशयाधानेन अनाधेयातिशयस्वरूपत्वात् ¶। नित्यनिर्विकारत्वेन स्वाश्रयायाः पराश्रयायाश्च क्रियाया अविषयतया, न §निघर्षणेनादर्शादिवदपि संस्कार्यत्वम्। न च देहस्थया स्नानादिक्रियया आत्मा संस्क्रियते। किन्त्वविद्यागृहीतस्तत्संहतोऽहं-कर्ता। तत्फलानुभवोऽपि || तस्यैव। न

---

* पुरुष इति ख०।

† श्रुतय इति ख०।

‡ तद्देतीति ख०। तद्वदेवेतीति ग०। उभयत्रैव असाम्प्रदायिकः पाठ उपलभ्यते।

¶ नानाधेयातिशयस्वरूपत्वादिति ख०। अनादेयातिशयस्वरूपत्वादिति ग०। उभयत्रैव परिदृश्यमानः पाठभेदः नितरामसमीचीनतया प्रतिभाति।

§ निष्कर्षणेनेति ख०। विघर्षणेनेति ग०।

|| ततफलानुभावोऽपीति ख०।

चाहं-कर्तवात्मा, तत्साचित्वात्। तथा च मन्त्रवर्णः—

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति।

आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः।

एको देवः सर्वभूतेषु गूढ़ः

सर्वव्यापी सर्वभूतान्तरात्मा।

कर्माध्यक्षः सर्वभूताधिवासः

साक्षी चेता केवलो निर्गुणश्च॥

सपर्य्यगाच्छुक्र*मकायमव्रण-

मस्नाविरं† शुद्धमपापविद्धम्।

कविर्मनीषी। इति चाविद्यागृहीतादहं-कर्तुरात्मनः स्वरूपमनाधेयातिशयं‡ नित्यशुद्धं निर्विकारं निष्कृष्यते। तस्मादात्मस्वरूपत्वेन न साध्यो मोक्षः। यद्येवं, किं वाक्यार्थज्ञानेन क्रियत इति चेत्, मोक्षप्रतिबन्धनिवृत्तिमात्रमिति ब्रूमः। तथा च श्रुतयः—त्वं हि नः पिता, योऽस्माकमविद्यायाः परं पारं तारयसि। श्रुतं ह्येवमेव भगवद्दृशेभ्यः, तरति शोकमात्मविदिति। सोऽहं भगवः शोचामि, तं मां भगवांच्छोकस्य पारं तारयतु। तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार इत्याद्याः। तस्मान्नित्यस्यैव मोक्षस्य

---

* शुक्रमिति ख०।

† अस्नाविरमिति ख०, ग०।

‡ अनाधेयातिशयमिति ग०। अयुक्तमेतत्।

प्रतिबन्धनिवृत्तिर्वाक्यार्थज्ञानेन क्रियते । *तन्निवृत्तिस्तु साध्यापि प्रध्वंसाभावरूपा न विनश्यति । ब्रह्म वेद ब्रह्मैव भवति, तमेव विदित्वातिमृत्युमेतीत्यादिवचनं, मोक्षस्य वेदनानन्तराभावितां† प्रतिपादयन्नियोगव्यवधानतां प्रतिरुणद्धि । न च, विदिक्रियाकर्मत्वेन ध्यानक्रियाकर्मत्वेन वा कार्यानुप्रवेशः, उभयकर्मत्वप्रतिषेधात् । अन्यदेव तद्विदितादथोऽविदितादपि, येनेदं सर्वं विजानाति, तत् केन विजानीयादिति । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इति च । न चैतावता शास्त्रस्य निर्विषयत्वम्‡ । अविद्यापरिकल्पितभेदनिवृत्तिपरत्वात् शास्त्रस्य । न हीदन्तया ब्रह्म विषयीकरोति शास्त्रम् । अपि त्वविषयं प्रत्यगात्मस्वरूपं §प्रतिपादयदविद्याकल्पितज्ञातृज्ञेयज्ञानविभागं निवर्तयति । तथा च शास्त्रम्—न दृष्टेर्द्रष्टारं पश्येर्न मते¶रित्येवमादि ॥

न च, ज्ञानादेव बन्धनिवृत्तिरिति श्रवणादिविध्यानर्थक्यम् । स्वभावप्रवृत्तसकलेतरविकल्पविमुखीकरणद्वारेण वाक्यार्थावगतिहेतुत्वात्तेषाम् । न च ज्ञानमात्राद्बन्धनिवृत्तिर्न दृष्टेति वाच्यम् । बन्धस्य मिथ्यारूपत्वेन ज्ञानोत्तरकालं स्थित्यनुपपत्तेः । अत एव न शरीरपातादूर्ध्वमेव बन्धनिवृत्तिरिति वक्तुं युक्तम् ।

---

* निवृत्तिस्त्विति ग० । पाठोऽयं नास्मभ्यं रोचते ।

† वेदनान्तर्भावितामिति ख० । असमीचीनमेतत् ।

‡ निर्विषयवचनमिति ख० ।

§ प्रतिपादयतीति ख० । स्वरूपेण प्रतिपादयतीति ग० । अयुक्तमेतत् ।

¶ न मतेरित्यंशः खचिह्नितपुस्तके नोपलभ्यते ।

न हि मिथ्यारूपसर्पभयनिवृत्तिः रज्जुयाथात्म्यज्ञानातिरेकेण सर्पविनाशमपेक्षते। यदि शरीरसम्बन्धः पारमार्थिकः, तर्हि तद्विनाशापेक्षा। स तु, ब्रह्मव्यतिरिक्ततया न पारमार्थिकः। यस्य तु बन्धो न निवृत्तस्तस्य ज्ञानमेव न जातमित्यवगम्यते, ज्ञानकार्यादर्शनात्। तस्माच्छरीरस्थितिर्भवतु वा मा वा वाक्यार्थ*ज्ञानसमनन्तरं मुक्त एवासौ। अतो न नियोगसाध्यो मोक्ष इति न ध्यानविधिशेषतया† ब्रह्मणः सिद्धिः। अपि तु, सत्यज्ञानमनन्तं ब्रह्म, तत्त्वमसि, अयमात्मा ब्रह्मेति तत्परेणैव पदसमुदायेन सिध्यतीति ॥

तदयुक्तम्। वाक्यार्थज्ञानमात्राद्बन्धनिवृत्त्यनुपपत्तेः। यद्यपि मिथ्यारूपो बन्धो ज्ञानबाध्यः, तथापि बन्धस्यापरोक्षत्वान्न परोक्षरूपेण वाक्यार्थज्ञानेन स बाध्यते‡। रज्ज्वादावपरोक्षसर्पप्रतीतौ विद्यमानायां, नायं सर्पो रज्जुरेषेत्याप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण भयानिवृत्तिदर्शनात्। आप्तोपदेशस्य तु भयनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्षनिमित्तप्रवृत्तिहेतुत्वेन। तथा हि, रज्जुसर्पदर्शनभयात् परावृत्तः पुरुषो, नायं सर्पो रज्जुरेषेत्याप्तोपदेशाद्वस्तुयाथात्म्य§दर्शने¶ प्रवृत्तः, तदेव प्रत्यक्षेण दृष्ट्वा भयान्निवर्तते। न च शब्द एव

* भवतु वा, महावाक्यार्थेति ख०।

† ध्यानविधिनिषेधतयेति ग०। लिपिकरप्रमाद एवात्र बीजम्।

‡ बाध्येत इति ख०।

§ तद्वस्तुयाथात्म्येति ग०।

¶ दर्शनेनेति ख०। न युक्तमेतत्।

प्रत्यक्षज्ञानं जनयतीति वक्तुं * युक्तं, तस्यानिन्द्रियत्वात् । ज्ञानसामग्रीष्विन्द्रियाण्येवापरोक्षज्ञानसाधनानि । न चास्यानभिसंहितफलकर्मानुष्ठानमृदितकषायस्य श्रवणमनननिदिध्यासनविमुखीकृतबाह्यविषयस्य पुरुषस्य वाक्यमेवापरोक्षज्ञानं जनयति । निवृत्तप्रतिबन्धे तत्परेऽपि † पुरुषे ज्ञानसामग्रीविशेषाणामिन्द्रियादीनां स्वविषयनियमातिक्रमादर्शनेन तदयोगात् । न च ध्यानस्य वाक्यार्थज्ञानोपायता, इतरेतराश्रयत्वात्—वाक्यार्थज्ञाने जाते तद्विषयध्यानं, ध्याने निवृत्ते वाक्यार्थज्ञानमिति । न च ध्यानवाक्यार्थज्ञानयोर्भिन्नविषयत्वम् । तथा सति ध्यानस्य वाक्यार्थज्ञानोपायता न स्यात् । न ह्यन्यध्यानमन्यज्ञानौन्मुख्यं‡मुत्पादयति । ज्ञातार्थस्मृतिसन्ततिरूपस्य ध्यानस्य वाक्यार्थज्ञानपूर्वकत्वमवर्जनीयम् । ध्येयब्रह्मविषयज्ञानस्य हेत्वन्तरासम्भवात् । न च ध्यानमूलं ज्ञानं वाक्यान्तरजन्यं, निवर्तक§ज्ञानं तत्त्वमस्यादिवाक्यजन्यमिति युक्तम् । ध्यानमूलमिदं वाक्यान्तरजन्यं ज्ञानं तत्त्वमस्यादिवाक्य¶जन्यज्ञानेनैकविषयं भिन्नविषयं वा । एकविषयत्वे तदेवेतरेतराश्रयत्वं, भिन्नविषयत्वे ध्यानेन तदौन्मुख्यापादनासम्भवः । किञ्च, ध्यानस्य ध्येयध्यात्राद्यनेकप्रपञ्चापेक्ष-

* युक्तं वक्तुमिति ग० ।

† निवृत्तिप्रतिबन्धे तत्परेऽपीति ख०, ग० ।

‡ वज्ञानौन्मुख्यमिति ग० । लिपिकरप्रमादविजृम्भितमेतत् ।

§ निवर्तकं ज्ञानमिति ख० ।

¶ वाक्यत एव जन्यज्ञानेनेति ख० ।

त्वात् निष्प्रपञ्च*ब्रह्मात्मैकत्वविषयवाक्यार्थज्ञानोत्पत्तौ दृष्टद्वारेण नोपयोग इति वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिं वदतः श्रवणमनननिदिध्यासनविधीनामानर्थक्यमेव। यतो वाक्यादपरोक्षज्ञानासम्भवाद्वाक्यार्थज्ञानेनाविद्या न निवर्तते†। तत एव जीवन्मुक्तिरपि‡ दूरोत्सारिता॥

का चेयं जीवन्मुक्तिः। सशरीरस्यैव मोक्ष इति चेत्, माता मे वन्ध्येतिवदसङ्गतार्थवचनम्। यतः, सशरीरत्वं बन्धः, अशरीरत्वमेव§ मोक्ष इति त्वयैव श्रुतिभिरुपपादितम्। अथ सशरीरत्व¶प्रतिभासे वर्तमाने, यस्यायं प्रतिभासो मिथ्येति प्रत्ययः, तस्य सशरीरत्व‖मिथ्याप्रतिभासनिवृत्तिरिति। न। मिथ्येति प्रत्ययेन सशरीरत्वं निवृत्तं चेत्, कथं सशरीरस्य मुक्तिः। अजीवतोऽपि मुक्तिः सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति कोऽयं जीवन्मुक्त** इति विशेषः। अथ सशरीरत्वप्रतिभासो††बाधितोऽपि यस्य द्विचन्द्रज्ञानवदनुवर्तते, स जीवन्मुक्त इति चेत्, न। ब्रह्मव्यतिरिक्तसकलवस्तुविषय-

---

* निस्वयं चेति ख०। अशुद्धमेतत्।

† विनिवर्तत इति ख०, ग०।

‡ जीवन्मुक्तिरितीति ग०। असमीचीनमेतत्।

§ अशरीर एवेति ग०।

¶ शरीरित्वप्रतिभास इति ख०।

‖ मिथ्याप्रतिभासेत्यंशः ख-गपुस्तकयोर्नोपलभ्यते।

** जीवन्मुक्तिरिति ख०, ग०। पाठोऽयं वैमुख्यमावहति।

†† बाधित इति खपुस्तके लिपिकरप्रमादात् पतित इत्यवगन्तव्यम्।

कत्वात्* बाधकज्ञानस्य। कारणभूताऽविद्याकर्मादिदोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति बाधितानुवृत्तिर्न शक्यते वक्तुम्। द्विचन्द्रादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानविषयीभूत‡चन्द्रैकत्वज्ञानाविषयत्वेनाबाधितत्वात् द्विचन्द्रप्रतिभासानुवृत्तिर्युक्ता। किञ्च, तस्य तावदेव चिरं यावन्न विमोक्ष्ये। अथ सम्पत्स्य इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति वदन्तीयं श्रुतिर्जीवन्मुक्तिं वारयति। सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता—वेदानिमं लोकममुञ्च परित्यज्यात्मानमन्विच्छेत§। बुद्धेश्चेत्¶ क्षेमप्रापणं, तच्छास्त्रैर्विप्रतिषिद्धम्—बुद्धेश्चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत। एतेन परं व्याख्यातमिति। अनेन ज्ञानमात्रान्मोक्षश्च निरस्तः। अतः सकलभेदनिवृत्तिरूपा मुक्तिर्जीवतो न सम्भवति। तस्माद्ध्याननियोगेन ब्रह्मापरोक्षज्ञानफलेनैव बन्धनिवृत्तिः। न च नियोगसाध्यत्वेन मोक्षस्यानित्यत्वप्रसक्तिः, प्रतिबन्धनिवृत्तिमात्रस्यैव साध्यत्वात्। किञ्च, न नियोगेन साक्षाद्बन्धनिवृत्तिः क्रियते। किन्तु निष्प्रपञ्चज्ञानैकरसब्रह्मापरोक्षज्ञानेन। नियोगस्तु तदपरोक्षं ज्ञानं जन-

---

* विषयत्वादिति ख०।

† तत्प्रतिपादकेति ख०। असमीचीनमेतत्।

‡ बाधकज्ञानभूतेति ख०, ग०।

§ अन्विच्छेदिति ख०, ग०।

¶ बुद्धेश्चेति ग०।

यति। कथं नियोगस्य ज्ञानोत्पत्तिहेतुत्वमिति चेत्, कथं वा भवतोऽनभिसंहितफलानां कर्मणां वेदनोत्पत्तिहेतुत्वम्। मनोनैर्मल्यद्वारेणेति चेत्, ममापि तथैव। मम तु निर्मले मनसि शास्त्रेण ज्ञानमुत्पाद्यते*। तव तु † नियोगेन मनसि निर्मले, ज्ञानसामग्री वक्तव्येति चेत्, ध्याननियोगनिर्मलं मन एव साधनमिति ब्रूमः। केनावगम्यत इति चेत्, भवतो वा कर्मभिर्मनो निर्मलं भवति, निर्मले मनसि श्रवणमनननिदिध्यासनैः सकलेतरविषयविमुखस्यैव शास्त्रं‡ निवर्तकज्ञानमुत्पादयतीति केनावगम्यते§। विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन। श्रोतव्यो मन्तव्यो निदिध्यासितव्यः। ब्रह्म वेद ब्रह्मैव भवतीत्यादिभिः शास्त्रैरिति चेत्, ममापि— श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, ब्रह्मविदाप्नोति परम्, न चक्षुषा गृह्यते नापि वाचा, मनसा तु विशुद्धेन, हृदा मनीषा, मनसाभिक्लृप्त इत्यादिभिः शास्त्रैर्ध्याननियोगेन मनो निर्मलं भवति। निर्मलञ्च मनो ब्रह्मापरोक्षज्ञानं जनयतीत्यवगम्यत इति निरवद्यम्। नेदं यदिदमुपासत इत्युपास्यत्वं प्रतिषिद्धमिति चेत्, ¶ मैवम्। नात्र ब्रह्मण उपास्यत्वं प्रति-

---

* उत्पद्यत इति ख०।

† तवेति क०।

‡ शास्त्रमित्यत्र वस्त्विति गपुस्तके पठ्यते।

§ केवलं काम्यत इति ख०। लिपिकरप्रमाद एवात्र बीजम्।

¶ नैवमिति ग०।

षिध्यते। अपि तु, ब्रह्मणि जगद्वैरूप्यं प्रतिपाद्यते। यदिदं जगदुपासते प्राणिनः, नेदं ब्रह्म, तदेव ब्रह्म त्वं विद्धि, यद्वाचानभ्युदितं, येन वागभ्युद्यत इति वाक्यार्थः। अन्यथा तदेव ब्रह्म त्वं विद्धीति विरुध्यते। ध्यानविधिवैयर्थ्यञ्चात्मनः स्यात्। अतो ब्रह्मसाक्षात्कारफलेन ध्याननियोगेनैवापरमार्थभूतस्य कृत्स्नस्य *द्रष्टृदृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः॥

यदपि कैश्चिदुक्तं, भेदाभेदयोर्विरोधो न विद्यत इति। तदयुक्तम्। न हि शीतोष्णतमःप्रकाशादिवद्भेदाभेदावेकस्मिन् वस्तुनि संगच्छेते। अथोच्येत, सर्वमेव हि वस्तुजातं प्रतीतिव्यवस्थाप्यम्। सर्वञ्च भिन्नाभिन्नं प्रतीयते कारणात्मना, जात्यात्मना चाभिन्नं, कार्यात्मना व्यक्त्यात्मना च भिन्नम्। छायातपादिषु विरोधः सहानवस्थाननियमलक्षणो भिन्नाधारत्वरूपश्च। कार्यकारणयोर्जातिव्यक्त्योश्च तदुभयमपि नोपलभ्यते। प्रत्युतैकमेव† वस्तु द्विरूपं‡ प्रतीयते। यथा—मृदयं घटः, षण्डो गौरिति। न चैकरूपं किञ्चि§दपि वस्तु लौकिकैर्दृष्टचरम्। न च दहनादेर्ज्वलनादिवदभेदो भेदोपमर्दी दृश्यत इति न वस्तुविरोधः। मृत्सुवर्णगवाश्वाद्यात्मनावस्थितस्यैव घटमुकुटषण्डमुण्डगवाद्यात्मना ¶ चावस्थानात्।

---

* दृष्टदृश्यादीति ख०। असमीचीनोऽयं पाठः।

† एवमेवेति ख०। अयुक्तमेतत्।

‡ विरूपमिति ख०, ग०। अयुक्तोऽयं पाठः।

§ किञ्चिदिति क०, ग०।

¶—मुण्डवड्वाद्यात्मनेति ग०।

न चाभिन्नस्य भिन्नस्य च * वस्तुनोऽभेदो भेदश्चैक एवाकार इतीश्वराज्ञा। प्रतीतत्वादैकरूप्यं चेत्, प्रतीतत्वादेव भिन्नाभिन्नत्वमिति द्वैरूप्यमभ्युपगम्यताम्। न हि विस्फारिताक्षः पुरुषो घटशरावखण्डमुण्डादिषु वस्तुषूपलभ्यमानेषु, इयं मृदयञ्च घटः, इदं गोत्वमियञ्च व्यक्तिरिति विवेक्तुं शक्नोति। अपि तु, मृदयं घटः खण्डो गौरित्येव प्रत्येति। अनुवृत्तिबुद्धिबोध्यं कारणमाकृतिश्च, व्यावृत्तिबुद्धिबोध्यं कार्यं व्यक्तिश्चेति विविनक्तीति चेत्, नैवम्। विविक्ताकारानुपलब्धेः। न हि सूक्ष्ममपि निरीक्षमाणैरिदमनुवर्तमानमिदञ्च व्यावर्तमानमिति पुरोऽवस्थिते वस्त्वन्याकारभेद उपलभ्यते। यथा संप्रतिपन्नैक्य †कार्यविशेषे चैकत्वबुद्धिरुपजायते। तथैव सकारणे ससामान्ये चैकत्वबुद्धि‡रविशेषोपजायते। एवमेव देशतः कालतश्चाकारतश्चात्यन्तविलक्षणेष्वपि वस्तुषु, तदेवेदमिति प्रत्यभिज्ञायते। अतोऽध्यात्मकमेव वस्तु प्रतीयत इति कार्यकारणयोर्जातिव्यक्त्योश्चात्यन्तभेदोपपादनं प्रतीतिपराहतम्॥

अथोच्येत—मृदयं घटः खण्डो गौरितिवत् देवोऽहं मनुष्योऽहमिति सामानाधिकरण्येनैक्यप्रतीतेरात्मशरीरयोरपि भिन्नाभिन्नत्वं स्यात्। अत इदं भेदाभेदोपपादनं निजसदननिहितहुतवहज्वालायत इति। तदिदमनाकलितभेदाभेदसाधनसामा-

---

* भिन्नस्य चेति खपुस्तके नोपलभ्यते।

† सम्प्रतिपन्नैककार्यविशेष इति ख०। असमीचीनमेतत्।

‡ अविशिष्टेति ग०। उपजायत्तेरविशिष्टेति ख०। अयुक्तमेतत्।

नाधिकरण्यतदर्थयाथात्म्यावबोध*विलसितम् । तथा हि— अबाधित एव प्रत्ययः सर्वत्रार्थं व्यवस्थापयति । देवाद्यात्माभिमानस्त्वात्मयाथात्म्यगोचरैः सर्वैः †प्रमाणैर्बाध्यमानो रज्जुसर्पादिबुद्धिवन्नात्मशरीरयोरभेदं साधयति । खण्डो गौर्मुण्डो गौरिति सामानाधिकरण्यस्य न केनचित् क्वचिद्बाधो दृश्यते । तस्मान्नातिप्रसङ्गः । अत एव जीवोऽपि ब्रह्मणो नात्यन्तभिन्नः । अपि तु ब्रह्मांशत्वेन भिन्नाभिन्नः । तत्राभेद एव स्वाभाविको, भेदस्त्वौपाधिकः‡ । कथमिदमवगम्यत इति चेत्, तत्त्वमसि । नान्योऽतोऽस्ति द्रष्टा । अयमात्मा ब्रह्मेत्यादिभिः श्रुतिभिः, ब्रह्मेमे द्यावापृथिवी इति प्रकृत्य §—

ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा उत ।
स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा ¶ पुमान् ॥

इत्याथर्वणिकानां संहितोपनिषदि ब्रह्मसूक्ते अभेदश्रवणाच्च ‖ ।

नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान् ॥

---

* अनवबोधविलसितमिति ख० । सन्दर्भविरुद्धमेतत् ।

† परिमाणैरिति ख० । लिपिकरप्रमादविलसितमेतत् ।

‡ भेद एवौपाधिक इति ख० । भेदस्त्वौपचारिक इति ग० ।

§ प्रकृत्या—इति ग० । लिपिकरप्रमाद एवात्र बीजम् ।

¶ भवानिति ग० ।

‖ भेदश्रवणाच्चेति ग० । अयुक्तमिदम् ।

ज्ञाज्ञौ द्वावजावीशानीशौ
क्रियागुणैरात्मगुणैश्च तेषाम्।
संयोगहेतुरपरोऽपि दृष्टः॥
प्रधानक्षेत्रज्ञपतिर्गुणेशः
संसारमोक्षस्थितिबन्धहेतुः॥
स कारणं कारणाधिपाधिपः॥
तयोरन्यः पिप्पलं स्वाद्व
त्त्यनश्नन्नन्योऽभिचाकशीति॥

य आत्मनि तिष्ठन् प्राज्ञेनात्मना संपरिष्वक्तो न वाह्यं किञ्चन वेद, नान्तरं *प्राज्ञेनात्मनाऽन्वारूढ़ उत्सृजन् याति†। तमेव विदित्वातिमृत्युमेतीत्यादिभिर्भेद‡श्रवणाच्च, जीव-परयोः भेदाभेदाववश्याश्रयणीयौ। तत्र, ब्रह्म वेद ब्रह्मैव भवतीत्यादिभिर्मोक्षदशायां जीवस्य ब्रह्मस्वरूपापत्तिव्यपदेशात्। यत्र त्वस्य सर्वमात्मैवाभूत्, तत् केन कं पश्येदिति§ तदानीं भेदेनेश्वरदर्शननिषेधाच्चाभेदः स्वाभाविक इत्यवगम्यते॥

ननु च, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति सहश्रुत्या तदानीमपि भेदः प्रतीयते। वक्ष्यति च, जगद्-व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च। भोगमात्रसाम्यलिङ्गा-

---

* प्राज्ञेनात्मना संपरिष्वक्तो न वाह्यं किञ्चन वेद। नान्तरमिति पाठः ख-पुस्तके पतित इति प्रतीयते।

† यातीति ख०।

‡ भेदाभेदेति ख०।

§ इति चेति ख०।

चेति । नैतदेवम् । नान्योऽतोऽस्ति द्रष्टेत्येवमादिश्रुतिशतैरात्म-भेदप्रतिषेधात् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विप-श्चितेति सर्वैः कामैः सह ब्रह्माश्नुते, सर्वगुणान्वितं ब्रह्माश्नुत इत्युक्तं भवति । अन्यथा, ब्रह्मणा सहेत्यप्राधान्यं * ब्रह्मणः प्रसज्येत । जगद्व्यापारवर्जमित्यत्र मुक्तस्य भेदेनावस्थाने सत्यै-श्वर्यस्य न्यूनताप्रसङ्गो वक्ष्यते । अन्यथा, सम्पद्याविर्भावः, स्वेन शब्दादित्यादिभिर्विरोधात् । तस्मादभेद एव स्वाभा-विकः । भेदस्तु, जीवानां परस्माद्ब्रह्मणः परस्परञ्च बुद्धीन्द्रिय-देहोपाधिकृतः । यद्यपि, ब्रह्म निरवयवं सर्वगतञ्च, तथाप्या-काश इव घटादिना, बुद्ध्याद्युपाधिना ब्रह्मण्यपि † भेदः सम्भवत्येव । न च भिन्ने ब्रह्मणि बुद्ध्याद्युपाधिसंयोगः, बुद्ध्या-द्युपाधिसंयोगाद्ब्रह्मणि भेद इतीतरेतराश्रयत्वम् ‡ । उपाधे-स्तत्संयोगस्य § च कर्मकृतत्वात्, तत्प्रवाहस्य चानादित्वात् । एतदुक्तं भवति—पूर्वकर्मसम्बद्धात् जीवात् स्वसम्बन्धे एवो¶ पाधिरुत्पद्यते । तद्युक्तात् कर्म । एवं बीजाङ्कुरन्यायेन कर्म‖ सम्बन्धस्यानादित्वाददोष इति । अतो, जीवानां परस्परं ब्रह्मणा चाभेद एव स्वाभाविकः, भेदस्त्वौपाधिकः । उपाधीनां

---

* अप्राधान्यञ्चेति ग० ।

† ब्रह्मणोऽपीति ख० ।

‡ इतरेतराश्रयत्वमिति क०, ग० ।

§ तत्तत्संयोगस्य चेति ख० ।

¶ स्वसम्बन्धरूपोपाधिरिति ख० । अयुक्तमिदम् ।

‖ कर्मोपाधिसम्बन्धस्येति ग० ।



पुनः परस्परं ब्रह्मणा चाभेदवत्, भेदोऽपि स्वाभाविकः *। उपाधीनामुपाध्यन्तराभावात्, तदभ्युपगमेऽनवस्थानाच्च। अतो जीवकर्मानुरूपं† ब्रह्मणो भिन्नाभिन्नस्वभावा एवोपाधयः उत्पद्यन्ते इति॥

अत्रोच्यते—अद्वितीयसच्चिदानन्दब्रह्मध्यानविषयविधिपरं वेदान्तवाक्यजातमिति वेदान्तवाक्यैरभेदः प्रतीयते। भेदावलम्बिभिः कर्मशास्त्रैः प्रत्यक्षादिभिश्च भेदः प्रतीयते। भेदाभेदयोः परस्परविरोधादनाद्यविद्यामूलतयापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इत्युक्तम्। तत्र‡ यदुक्तं, भेदाभेदयोरुभयोरपि प्रतीतिसिद्धत्वान्न विरोध इति। तदयुक्तम्। कस्माच्चित्कस्यचित् विलक्षणत्वं हि तस्मात्तस्य भेदः, तद्विपरीतत्वं चाभेदः। तयोः तथाभावातथाभावरूपयो§रैक्यत्र सम्भवमनुन्मत्तः को ब्रवीति। कारणात्मना जात्या¶त्मना चाभेदः, कार्यात्मना व्यक्त्यात्मना च भेद इत्याकारभेदाद्विरोध इति चेत्, न। विकल्पासहत्वात्। आकारभेदादविरोध इति‖ वदतः, किमेकस्मिन्नाकारे भेदः, आकारान्तरे चाभेद** इत्यभिप्रायः। उताकारद्वययोगि-

---

* भेदस्त्वौपाधिक इत्यादिः स्वाभाविक इत्यन्तः सन्दर्भः ख-पुस्तके नोपलभ्यते।

† जीवकर्मानुरूपा इति ख०।

‡ अत्रेति ख०।

§ तथाभावाभावरूपयोरिति ख०। पाठोऽयं संख्यावतां वैमुख्यमावहति।

¶ ज्ञानात्मनेति ख०। अयुक्तमेतत्।

‖ अविरोधं वदत इति ग०।

** वाभेद इति ख०।

वस्तुगतावुभावपीति। पूर्वस्मिन् कल्पे, व्यक्तिगतो भेदो जातिगतश्चाभेद इति नैकस्य द्व्यात्मकता। जातिर्व्यक्तिरिति चैकमेव वस्त्विति चेत्, तर्ह्याकारभेदादविरोधः परित्यक्तः स्यात्। एकस्मिंश्च विलक्षणत्वतद्विपर्ययौ विरुद्धावित्युक्तम्। द्वितीये तु कल्पे, अन्योन्यविलक्षणमाकार*द्वयमप्रतिपन्नञ्च। तदाश्रयभूतं वस्त्विति तृतीयाभ्युपगमेऽपि† त्रयाणामन्योन्यवैलक्षण्यमेवोपपादितं स्यात्। न पुनरभेदः। आकारद्वयनिरूप्यमाणाविरोधं ‡तदाश्रयभूते § वस्तुनि भिन्नाभिन्नत्वमिति चेत्, स्वस्माद्विलक्षणं स्वाश्रयमाकारद्वयं स्वस्मिन् विरुद्धधर्मद्वयसमावेशनिर्वाहकं कथं भवेत्। अविलक्षणं तु कथन्तराम्। आकारद्वयतद्वतोश्च द्व्यात्मकत्वाभ्युपगमे निर्वाहकान्तरापेक्षयानवस्थानात्¶। न च सम्प्रतिपन्नैक्यव्यक्तिप्रतीतिवत् तत्तत्सामान्येऽपि|| वस्तुन्येकरूपा प्रतीतिरुपजायते। यत ** इदमित्थमिति सर्वत्र प्रकारप्रकारितयैव सर्वा प्रतीतिः। तत्र, प्रकारांशो जातिः, प्रकार्यंशो व्यक्तिरिति नैकाकारताप्रतीतिः। अत एव जीवस्यापि ब्रह्मणो भिन्नाभिन्नत्वं न सम्भ-

*—विलक्षणाकारद्वयमिति ग०।

† त्रितयाभ्युपगमेऽपीति ख०, ग०।

‡—विरोधतदाश्रयेति ख०। अयुक्तमेतत्।

§ तदव्ययभूते इति ग०। असमीचीनमेतत्।

¶ अनवस्था स्यादिति ख०, ग०।

|| तत्तदिति ख-गपुस्तकयोर्न पठ्यते।

** यत इति न पठति ख-पुस्तकम्।



वति। तस्मादभेदस्यानन्यथासिद्धशास्त्रमूलत्वादनाद्यविद्यामूल *एव भेदप्रत्ययः॥

नन्वेवं†, ब्रह्मण एवाज्ञत्वात्तन्मूलाश्च जन्मजरामरणादयो दोषाः प्रादुःस्युः। ततश्च, यः सर्वज्ञः सर्ववित्। एष आत्मापहतपाप्मेत्यादीनि शास्त्राणि बाध्येरन्। नैवम्। अज्ञत्वादिदोषाणामपरमार्थत्वात्। भवतस्तूपाधिब्रह्मव्यतिरिक्तं वस्त्वन्तरमनभ्युपगच्छतो ब्रह्मण्येवोपाधिसंसर्गः, तत्कृताश्च जीवत्वाज्ञत्वादयो दोषा परमार्थतयैव‡ भवेयुः। न हि, ब्रह्मणि निरवयवेऽच्छेद्ये सम्बध्यमाना उपाधयस्तच्छित्त्वा भित्त्वा वा § सम्बध्यन्ते। अपि तु, ब्रह्मस्वरूपे संयुज्य तस्मिन्नेव स्वकार्याणि कुर्वन्ति॥

यदि मन्वीत—उपाध्युपहितं ब्रह्म जीवः, स चाणुपरिमाणः। अणुत्वञ्चावच्छेदकस्य मनसोऽणुत्वात्। स चावच्छेदकोऽनादिः¶। एवमुपाध्युपहिते देशे‖ सम्बध्यमाना दोषा, अनुपहिते परे ब्रह्मणि न सम्बध्यन्त इति। इहायं**

---

* एकस्मिन् द्व्ये अनाद्यविद्यामूल इति ख०। पाठोऽयं न समीचीनतया प्रतिभाति।

† न चैव ब्रह्मण एवाज्ञत्वमिति ख०। लिपिकरप्रमादविलसितमेतत्।

‡ परमार्थत एवेति ख०।

§ भित्त्वा चेति ख०।

¶ अवच्छेद इति ख०।

‖ उपहितेंऽशे इति ख०।

** इति हायमिति ख०, ग०।

प्रष्टव्यः *। किमुपाधिना—छिन्नो ब्रह्मखण्डोऽणुरूपो जीवः, उताच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषः, उतोपाधिसंयुक्तं ब्रह्मस्वरूपम्, अथोपाधिसंयुक्तं चेतनान्तरम्, †अथोपाधिरेवेति। अच्छेद्यत्वाद्ब्रह्मणः प्रथमः कल्पो न कल्प्यते। आदिमत्त्वञ्च जीवस्य स्यात्। एकस्य सतो द्वैधीकरणं हि छेदनम्। द्वितीये कल्पे, ब्रह्मण एव प्रदेशविशेषे उपाधिसम्बन्धादौपाधिकाः सर्वे दोषास्तस्यैव ‡ स्युः। उपाधौ गच्छत्युपाधिना स्वसंयुक्तब्रह्मप्रदेशाकर्षणायोगादनुक्षणमुपाधिसंयुक्तब्रह्मप्रदेशविशेष§भेदात् क्षणे क्षणे बन्धमोक्षौ स्याताम्। आकर्षणे चाच्छिन्नत्वात् कृत्स्नस्य ब्रह्मण ¶ आकर्षणं स्यात्। निरंशस्य व्यापिन आकर्षणं न सम्भवतीति चेत्, तर्ह्युपाधिरेव गच्छतीति पूर्वोक्त एव दोषः स्यात्। अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषाञ्च जीवानां ब्रह्मण एव प्रदेशत्वेनैकत्व‖प्रतिसन्धानं स्यात्**। प्रदेशभेदादप्रतिसन्धाने चैकस्यापि स्वोपाधौ गच्छति सति, प्रतिसन्धानं

---

* द्रष्टव्य इति ख०। अयुक्तमेतत्।

† उतेति ख०।

‡ तथैवेति ग०।

§ विदेशभेदादिति ख०। प्रदेशभेदादिति ग०। उभयत्रैव समीचीनतया न पठ्यते।

¶ ब्रह्मण इति खपुस्तके न पठ्यते।

‖ अभेदप्रतिसन्धानमिति ख०।

** न स्यादिति ग०। सन्दर्भविरुद्धमेतत्।

न स्यात् *। तृतीये तु कल्पे, ब्रह्मस्वरूपस्यैवोपाधिसम्बन्धेन जीवत्वापातात्, तदतिरिक्तानुपहितब्रह्मासिद्धिः स्यात्। सर्वेषु च देहेष्वेक एव जीवः स्यात्। तुरीये तु कल्पे, ब्रह्मणोऽन्य एव जीव इति जीवभेदस्यौपाधिकत्वं परित्यक्तं स्यात्। चरमे, चार्वाकपक्ष एव परिगृहीत स्यात्। तस्मादभेद-शास्त्रबलेन कृत्स्नस्य भेदस्याविद्यामूलत्वमेवाभ्युपगन्तव्यम्। अतः प्रवृत्तिनिवृत्तिरूपप्रयोजनपरतयैव शास्त्रस्य प्रामाण्येऽपि, ध्यानविधिशेषतया † वेदान्तवाक्यानां ब्रह्मस्वरूपे प्रामाण्य-मुपपन्नमिति ॥

तदप्ययुक्तम्। ध्यानविधिशेषत्वेऽपि‡ वेदान्तवाक्या-नामर्थसत्यत्वे प्रामाण्यायोगात्। एतदुक्तं भवति। ब्रह्म-स्वरूपगोचराणि वाक्यानि किं ध्यानविधिनैकवाक्यतामापन्नानि ब्रह्मस्वरूपे प्रामाण्यं प्रतिपद्यन्ते। उत स्वतन्त्राण्येव। एक-वाक्यत्वे ध्यानविधिपरत्वेन ब्रह्मस्वरूपे तात्पर्यं न सम्भवति §। भिन्नवाक्यत्वे प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादनवबोधकत्व-मेव। न च वाच्यम्, ध्यानं नाम स्मृतिसन्ततिरूपम्। तच्च स्मर्तव्यैकनिरूपणीयमिति। ध्यानविधेः स्मर्तव्यविशेषाकाङ्क्षा-याम्—इदं सर्वं यदयमात्मा, अयमात्मा ब्रह्म, सर्वानुभूतिः,

---

* प्रदेशभेदादित्यादिर्न स्यादित्यन्तः सन्दर्भः ख-पुस्तके न दृश्यते।

† विशेषतयेति ख०, ग०। असमीचीनमेतत्।

‡ विशेषत्वेऽपीति ख०। ध्यानविशेषत्वेऽपीति ग०। अयुक्तमिदम्।

§ न ध्यानविधिपरत्वेन ब्रह्मस्वरूपे तात्पर्यं सम्भवतीति ग०।

सत्यं ज्ञानमनन्तं ब्रह्मेत्यादीनि स्वरूपतद्विशेषादीनि समर्पयन्ति। तेनैकवाक्यतामापन्नान्यर्थसद्भावे * प्रमाणमिति ध्यानविधेः स्मर्तव्यविशेषापेक्षत्वेऽपि, मनो† ब्रह्मेत्युपासीतेत्यादिदृष्टिविधिवदसत्येनाप्यर्थविशेषेण ध्याननिर्वृत्त्युपपत्ते ‡ र्ध्येयसत्यत्वानपेक्षणात्। अतो वेदान्तवाक्यानां प्रवृत्तिनिवृत्तिप्रयोजनविधुरत्वात् ध्यानविधिशेषत्वेऽपि ¶ ध्येयविषयस्वरूपसमर्पणमात्रपर्यवसानात्, स्वातन्त्र्येणापि बालातुराद्युपच्छन्दनवाक्यवत् ज्ञानमात्रेणैव पुरुषार्थपर्यन्ततासिद्धेश्च॥

परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावात् ब्रह्मणः शास्त्रप्रमाणकत्वं न सम्भवतीति प्राप्तम्। तत्र प्रतिपाद्यते—'तत्तु समन्वयादिति। समन्वयः सम्यगन्वयः, पुरुषार्थतयाऽन्वय इत्यर्थः। परमपुरुषार्थभूतस्यानवधिकातिशयानन्दस्वरूपस्य ब्रह्मणोऽभिधेयतयान्वयात् तच्छास्त्रप्रमाणकत्वं सिध्यत्येवेत्यर्थः। निरस्तनिखिलदोषगन्धनिरतिशयानन्दस्वरूपतया परमप्राप्यं ब्रह्म बोधयन् वेदान्तवाक्यगणः प्रवृत्तिनिवृत्तिपरताविरहान्न प्रयोजनपर्यवसायीति ब्रुवाणो राजकुलवासिनः पुरुषस्य कौलेयक§कुलाननुप्रवेशेन प्रयोजनशून्यतां ब्रूते। एतदुक्तं भवति।

---

* अर्थसत्यत्वे मिथ्यात्वेऽनुदासीनत्वमात्रपदार्थसद्भाव इत्यधिकं दृश्यते ख-पुस्तके।

† नामब्रह्मेति ख०।

‡ निवृत्त्युपपत्तेरिति ख०। अपपाठोऽयम्।

¶ विशेषत्वेऽपीति ख०, ग०।

§ कौलेयककुलानुप्रवेशेनेति ख०। कौलेयककुलाप्रवेशेनेति ग०।

अनादिकर्मरूपाविद्यावेष्टनतिरोहितपरावरतत्त्वयाथात्म्यस्व*स्वरूपावबोधानां देवासुरगन्धर्वसिद्धविद्याधरकिन्नरकिम्पुरुषयक्षरक्षःपिशाचमनुजपशुशकुनिसरीसृपवृक्षगुल्मलतादूर्वादीनां स्त्रीपुंनपुंसकभेदभिन्नानां क्षेत्रज्ञानां व्यवसित†धारकपोषकभोग्यविशेषाणां मुक्तानां स्वस्य चाविशेषेणा‡नुभवसम्भवे स्वरूपगुणविभवचेष्टितैरनवधिकातिशयानन्दजनकं¶ परं ब्रह्मास्तीति बोधयदेव वाक्यं प्रयोजनपर्यवसायि। प्रवृत्तिनिवृत्तिनिष्ठन्तु यावत् पुरुषार्थान्वयबोधं न प्रयोजन§पर्यवसायि। एवम्भूतं ब्रह्म कथं प्राप्यत इत्यपेक्षायाम्—ब्रह्मविदाप्नोति परम्, आत्मानमेव लोकमुपासीतेति वेदनादिशब्दैरुपासनं ब्रह्मप्राप्त्युपायतया विधीयते। यथा, स्ववेश्मनि निधिरस्तीति वाक्येन निधिसद्भावं ज्ञात्वा तृप्तः सन् पश्चात्तदुपादाने च प्रयतते। यथा च, कश्चित् राजकुमारो बालक्रीड़ासक्तो नरेन्द्रभवनान्निष्क्रान्तो दुर्गाद्भ्रष्टो‖ नष्ट इति राज्ञा ज्ञातः स्वयञ्चाज्ञातपितृकः केनचित् द्विजवर्य्येण वर्धितोऽधिगतवेदशास्त्रार्थः** षोड़शवर्षः सर्वकल्याणगुणाकरस्तिष्ठन्, पिता ते सर्वलोकाधि-

* स्वरूपबोधकानामिति क०, ग०।

† व्यवस्थितेति ग०।

‡ विशेषेणेति ख०। सन्दर्भविरुद्धमेतत्।

¶ आनन्दं जनयद्दिति ख०।

§ —बोधनप्रयोजनेति ख०। नितरामयुक्तमेतत्।

‖ मार्गात् भ्रष्ट इति ग०।

** अधिगतवेदशास्त्र इति ग०।

पतिर्गाम्भीर्यौदार्यवात्सल्यसौशील्यशौर्यवीर्यधैर्य-पराक्रमादि*गुण-गणसम्पन्नः त्वामेव नष्टं पुत्रं दिदृक्षुः पुरवरे तिष्ठतीति केनचिदभियुक्ततमेन प्रयुक्तं वाक्यं शृणोति चेत्, तदानीमेवाहं तावत् जीवतः † पुत्रोऽस्मत्पिता च सर्वसम्पत्समृद्ध इति निरतिशयहर्षसमन्वितो भवति। राजा च स्वपुत्रं जीवन्तमरोगमतिमनोहरदर्शनं विदितसकलवेद्यं श्रुत्वा अवाप्तसमस्तपुरुषार्थो भवति। पश्चात् तावुभौ ‡ सङ्गच्छेते चेति॥

यत्पुनः, परिनिष्पन्नवस्तुगोचरस्य वाक्यस्य ¶ तज्ज्ञानमात्रेणापि पुरुषार्थपर्यवसानात् बालातुराद्युपच्छन्दनवाक्यवत् नार्थसद्भावे प्रामाण्यमिति। तदसत्। अर्थसद्भावाभावे निश्चिते ज्ञातोऽप्यर्थः पुरुषार्थाय न भवति। बालातुरादीनामप्यर्थसद्भावभ्रान्त्यैव§ हर्षाद्युत्पत्तिः। तेषामेव तस्मिन्नपि ज्ञाने विद्यमाने यद्यर्थाभावनिश्चयो जायेत, ततस्तदानीमेव हर्षादयो निवर्तेरन्। औपनिषदेष्वपि वाक्येषु ब्रह्माखिलतात्पर्याभावनिश्चये ब्रह्मज्ञाने सत्यपि पुरुषार्थपर्यवसानं न स्यात्। ||अतो, यतो वा इमानीत्यादि वाक्यमखिल**जग-

---

* गाम्भीर्यौदार्यसौशील्यवीर्यपराक्रमादीति ख०।

† तावदिति क-ख-पुस्तकयोः न पठ्यते।

‡ पश्चादुभाविति ख०।

¶ वाक्यस्येति न दृश्यते ख-पुस्तके। लिपिकरप्रमाद एवात्र बीजम्।

§ भ्रान्त्येति ग०।

|| अत इति न पठति ख-पुस्तकम्।

** निखिलेति ख०, ग०।

दैककारणं निरस्तनिखिलदोषगन्धं सर्वज्ञसत्यसंकल्पत्वाद्य-
नन्तकल्याणगुणाकरमनवधिकातिशयानन्दं * ब्रह्मास्तीति बोधय-
तीति सिद्धम् ॥

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

(क) यतो वा इमानीत्यादिजगत्कारणवादि†वाक्यप्रतिपाद्यं
सर्वज्ञं सत्यसंकल्पं सर्वशक्ति समस्तहेयप्रत्यनीककल्याणगुणैकतानं

---

(क) सदेव सोम्येदमग्र आसीत्। तदैक्षत बहु स्यां प्रजायेयेति छान्दोग्यवाक्यं विषयः। तत्र पूर्वभावितया सकलप्रपञ्चस्यास्य कारणतया श्रूयमाणं सदिति वस्तु किं सांख्योक्तं प्रधानमुत अनवधिकातिशयानन्दं ब्रह्मेति संशयः। तत्र प्रधानमेव जगत्कारणं सत्पदवाच्यमिति पूर्वपक्षः। इदं-शब्दवाच्यस्य वियदादिकार्यस्य तत्परिणामभूतत्वात्। कार्यकारणयोरनन्यत्वेन प्रतिज्ञादृष्टान्तयोरपि अन्वयेनानुमानाकारवाक्यवेद्यत्वात्। तथाहि। येनाश्रुतं श्रुतं भवतीत्यादिना एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय, यथा सोम्यैकेन मृत्पिण्डेनेति दृष्टान्तेन तदुपपाद्यते। अपि च। रजःसत्त्वयोगात् तत्र क्रियाज्ञानशक्तिमत्त्वस्य सम्भवात्, तदैक्षत बहु स्यामिति गौणमीक्षणं भवितुमर्हति। तत्तेज ऐक्षतेत्यादिगौणेक्षणसाहचर्याच्च। अत्र राद्धान्तः। सदेव सोम्येदमिति सच्छब्दवाच्यं नाचेतनं प्रधानम्। अपि तु। सर्वज्ञसत्यसङ्कल्पत्वादिगुणयुक्तं परं ब्रह्मैवेति निश्चीयते। कुतः। तदैक्षत बहु स्यामिति बहुभवनसङ्कल्परूपेक्षणान्वयात्। अस्माकन्तु, चिदचिद्वस्तुशरीरतया तद्विशिष्टस्य ब्रह्मण एव कार्यकारणभावेनान्वयात् न काचिदनुपपत्तिः।

---

* गुणाकरानवधिकेति ख०, ग०।

† जगत्कारणवादीति ग-पुस्तके नोपलभ्यते।

*ब्रह्म जिज्ञास्यमित्युक्तम् । इदानीं जगत्कारणवादिवाक्यानामानुमानिकप्रधानादिप्रतिपादनानर्हतोच्यते—'ईक्षतेर्नाशब्द-मित्यादिना । इदमाम्नायते छान्दोग्ये । सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयं, तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजतेत्यादि । तत्र सन्दिह्यते, किं सच्छब्दवाच्यं जगत्-

---

किञ्च । रजःसत्त्वरूपतया क्रियाज्ञानशक्तिसम्बन्धः प्रधानस्येति यदुक्तम् । तदयुक्तम् । त्रिगुणात्मिकायाः प्रकृतेः तमःपार्थक्येन रजःसत्त्वयोगाभावात् । तमसि व्यग्रभूतेऽपि तन्न सम्भवति । सत्त्वादीनां गुणानां साम्यावस्था प्रकृतिरित्यङ्गीकाराच्च । नचानुमानाकारमेतद्वाक्यं, हेत्वनुपदेशात् । तेषु अन्यज्ञानेन अन्यज्ञानसम्भवपरिजिहीर्षया तु दृष्टान्तोपादानम् । नच, मुख्येक्षणसम्भवे गौणपरिग्रहो युक्तः । सदेवेत्याद्युपक्रम्य, स आत्मेति सच्छब्दवाच्यस्य आत्मशब्देन परामर्शदर्शनात् । ऐतदात्म्यमिदं सर्वमिति तेजःप्रभृतीनामपि तदात्मकत्वावगमात् तत्र न गौणमीक्षतिश्रवणम् । अपि तु, तेजःप्रभृतिशब्दैरपि तच्छरीरकं ब्रह्मैवाभिधीयते । अनेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणीति श्रवणात् । अतः परमेव ब्रह्म जगत्कारणवादिवेदान्तवेद्यमिति ॥ १ । १ ॥ अ० ५ ॥

(सूत्रार्थस्तु) न शब्दः श्रुतिः प्रमाणं यस्मिन्, तत् 'अशब्दम्' आनुमानिकं सांख्यपरिकल्पितं प्रधानं 'न' जगत्कारणं सत्पदवाच्यं वस्तु । अपि तु, ब्रह्मैव चेतनम् । कुतः । 'ईक्षतेः' कारणस्य ईक्षितृत्वश्रवणात् । तदैक्षत बहु स्यां प्रजायेयेति श्रुतेः । ईक्षणं नाम पर्यालोचनम्, अध्यवसाय इति यावत् । तस्य चेतनासाधारणधर्मत्वेन अचेतने प्रधाने असम्भवात् ॥ ५ ॥

---

* कल्याणैकतानमिति ग० ।

कारणं परोक्तमानुमानिकं प्रधानम्, उत उक्तलक्षणं* ब्रह्मेति। किं प्राप्तं, प्रधानमिति। कुतः, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमितीदं-शब्दवाच्यस्य चेतनभोग्यभूतस्य सत्त्वरजस्तमोमयस्य वियदादिनानारूपविकारावस्थस्य वस्तुनः कारणावस्थां वदति। कारणभूतद्रव्यस्यावस्थान्तरापत्तिरेव हि कार्यता। अतो यद्द्रव्यं यत्स्वभावञ्च कार्यावस्थं, तत्स्वभावं †तदेव द्रव्यं कारणावस्थम्। सत्त्वरजस्तमोमयञ्च कार्यमिति। गुणसाम्यावस्थं प्रधानमेव हि‡ कारणं, तदेवोपसंहृतसकलविशेषं सन्मात्रमिति सदेव सोम्येदमग्र आसीदेकमेवेत्यभिधीयते। तत एव च कार्यकारणयोरनन्यत्वम्। तथा सत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः। अन्यथा, यथा सोम्यैकेन मृत्पिण्डेनेत्यादि मृत्पिण्डतत्कार्यदृष्टान्तदार्ष्टान्तिकयोर्वैरूप्यञ्चेति जगत्कारणवादिवाक्येन महर्षिणा कपिलेनोक्तं प्रधानमेव प्रतिपाद्यते। प्रतिज्ञादृष्टान्तरूपेणानुमानवेषमेवेदं वाक्यमिति सच्छब्दवाच्यमानुमानिकमित्येवं प्राप्तेऽभिधीयते—'ईक्षतेर्नाशब्दमिति। यस्मिन् शब्द एव प्रमाणं न भवति, तदशब्दमानुमानिकं प्रधानमित्यर्थः। 'न' तज्जगत्कारणवादिवाक्यप्रतिपाद्यम्। कुतः, 'ईक्षतेः'। सच्छब्दवाच्यसम्बन्धिव्यापारविशेषाभिधायिन ईक्षतेर्धातोः श्रवणात्। तदैक्षत बहु स्यां प्रजायेयेति। ईक्षणक्रियायोगस्याचेतने प्रधाने न

---

* लक्षणमेवेति ख०।

† तत्स्वभावस्थमिति ग०।

‡ प्रधानमेव कारणमिति ख०, ग०।

सम्भवति । अत ईक्षणक्षम*श्चेतनविशेष एव सर्वज्ञः सर्वशक्तिः पुरुषोत्तमः सच्छब्दाभिधेयः । तथा च सर्वेष्वपि सृष्टिप्रकरणेषु ईक्षापूर्विकैव सृष्टिः प्रतीयते । स ऐक्षत लोकानु सृजा † इति, स इमांल्लोकानसृजत, स ईक्षाञ्चक्रे, स प्राणमसृजतेत्यादिषु ॥

ननु च, कार्यानुगुणेनैव कारणेन भवितव्यम् । सत्यम् । सर्वकार्यानुगुण एव सर्वज्ञः सर्वशक्तिः सत्यसंकल्पः पुरुषोत्तमः सूक्ष्मचिदचिद्वस्तुशरीरकः । यथाह,—

परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ।

यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । यस्याव्यक्तं शरीरम्, यस्य मृत्युः शरीरम्, एष सर्वभूतान्तरात्मा अपहतपाप्मेत्यादि । तदेतत्, न विलक्षणत्वादित्यादिषु प्रतिपादयिष्यते । अतः सृष्टिवाक्यानि न प्रधानप्रतिपादनयोग्यानीत्युच्यते । वस्तुविरोधस्तत्रैव परिहरिष्यते ॥

यत्तूक्तं, प्रतिज्ञादृष्टान्तयोगादनुमानरूपमेवेदं वाक्यमिति । तदसत् । हेत्वनुपादानात् ‡ । येनाश्रुतं श्रुतमित्येकविज्ञानेन सर्वविज्ञाने प्रतिपिपादयिषिते ¶ सर्वात्मना तदसम्भवं मन्वा-

---

* ईक्षणक्षणवादीति ख० ।

† असृजतेति ख० ।

‡ हेत्वनुवादादिति ग० । अयुक्तमेतत् ।

¶ एकविज्ञाने प्रतिपिपादयिषिते इति ख० । लिपिकरप्रमादविजृम्भणमिदम् ।

नस्य* श्वेतकेतोः तत्सम्भवमात्रप्रदर्शनाय हि दृष्टान्तोपादानम्। ईक्षत्यादिश्रवणादेव हि अनुमानगन्धाभावोऽवगतः॥

अथ स्यान्न चेतनगतमुख्यमीक्षणमिहोच्यते। अपि तु प्रधानगतं गौणमीक्षणम्। तत्तेज ऐक्षत, ता आप ऐक्षन्तेति गौणेक्षणसाहचर्यात्। भवति च अचेतनेष्वपि चेतनधर्मोपचारः। यथा, वृष्टिप्रतीक्षाः शालयः; वर्षेण बीजं प्रतिसञ्जिहर्षतिं‡। अतो गौणमीक्षणमितीमामाशङ्कामनुभाष्य परिहरति।

## गौणश्चेन्नात्मशब्दात्॥ ६॥

(ख) यदुक्तं गौणेक्षणसाहचर्यात् सतोऽपीक्षणव्यपदेशः, सर्गनियत¶पूर्वावस्थाभिप्रायो 'गौण' इति। तन्न। ऐतदात्म्यमिदं

(ग) प्रपतनासन्नं कूलमालक्ष्य, कूलं पिपतिषतीत्यचेतनेऽपि चेतनवदुपचारदर्शनेन, तत्तेज ऐक्षतेत्याद्यचेतनगतगौणशब्दसाहचर्येण च, तदैक्षतेत्यत्र ईक्षतिप्रयोगो 'गौण' इति 'चेत्'। 'न'। कस्मात्। 'आत्मशब्दात्'। सदेव सोम्येदमग्र आसीदित्युपक्रम्य, ऐतदात्म्यमिदं सर्वं, तत्सत्यं, स आत्मेति सच्छब्दवाच्यस्यात्मशब्देन परामर्शदर्शनात्। नहि चेतनं श्वेतकेतुं प्रति अचेतनप्रधानस्यात्मत्वेनोपदेशः सम्भवति। कूलं पिपतिषतीत्यादौ तु संशयस्थलत्वात् युक्तं गौणत्वम्। प्रकृते तु गौणमुख्ययोर्गौणस्य नितरां जघन्यत्वेन संशयाभावात्॥ ६॥

* सत्यं तस्येति ख०।

† ऐक्षत इत्यादीति ख०।

‡ वर्षेण वातं प्रतिसञ्जिहीर्षतीति ख०। अपपाठोऽयम्।

¶ नियमनेति ख०।

सर्वं, तत्सत्यं, स आत्मेति सच्छब्दप्रतिपादितस्यात्मशब्देन व्यपदेशात्। एतदुक्तं भवति। ऐतदात्म्यमिदं सर्वं, तत्सत्यं, स आत्मेति चेतनाचेतनात्मकप्रपञ्चोद्देशेन, स आत्मेत्यात्मत्वोपदेशोऽयं नाचेतने प्रधाने सङ्गच्छत इति। अतस्तेजोऽन्नानामपि परमात्मैवात्मेति तेजःप्रभृतयोऽपि शब्दाः परमात्मन एव वाचकाः। तथा हि, हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति परमात्मानुप्रवेशादेव तेजःप्रभृतीनां वस्तुत्वं * तत्तन्नामभाक्त्वञ्चेति, तत्तेज ऐक्षत, ता आप ऐक्षन्तेत्यपि मुख्य एव ईक्षणव्यपदेशः। अतः साहचर्यादपि तदैक्षतेत्यत्र गौणत्वाशङ्का दूरो†त्सारितेति सूत्राभिप्रायः॥

इतश्च न प्रधानं सच्छब्दप्रतिपाद्यम्।

## तन्निष्ठस्य मोक्षोपदेशात्॥ ७॥

(क) मुमुक्षोः श्वेतकेतोः तत्त्वमसीति ‡सदात्मकत्वानुसन्धानमुपदिश्य तन्निष्ठस्य, तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्य¶ इति शरीरपातमात्रान्तरायो ब्रह्मसम्पत्तिलक्षणो

---

(क) तस्मिन् सद्रूपे कारणे 'निष्ठा—भक्तिरूपापन्नं ज्ञानं यस्य, तस्य 'मोक्ष उपदिश्यते। तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्य-

---

* वस्त्वन्तरमिति ख०। असमीचीनमेतत्।

† दूरत उत्सारितेति ख०।

‡ तदात्मकेति ख०।

¶ विमोक्ष्येत सम्पत्स्यत इति ग०। असाम्प्रदायिकोऽयं पाठः।

मोक्ष इत्युपदिशति। यदि च प्रधानमचेतनं कारणमुपदिश्येत, तदा* तदात्मकत्वानुसन्धानस्य मोक्ष†साधनत्वोपदेशो नोपपद्यते। यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवतीति तन्निष्ठस्याचेतनसम्पत्तिरेव स्यात्। नच मातापितृसहस्रेभ्योऽपि वत्सलतरं शास्त्रमेवंविधतापत्रयाभिहति‡हेतुभूतामचित्सम्पत्तिमुपदिशति। प्रधानकारणवादिनोऽपि हि तथा प्रधाननिष्ठस्य मोक्षं नाभ्युपगच्छन्ति॥

इतश्च न प्रधानम्।

हेयत्वावचनाच्च॥ ८॥

(क) यदि प्रधानमेव कारणं सच्छब्दाभिहितं भवेत्। तदा मुमुक्षोः श्वेतकेतोस्तदात्मकत्वं¶ मोक्षविरोधित्वाद्धेयत्वेनोप-

---

इति श्रुतेः। अतः, सच्छब्दाभिहितं न प्रधानम्। अपि तु, परमेव ब्रह्म। यदि चेतनं मुमुक्षुं श्वेतकेतुं प्रति अचेतनं कारणमुपदिश्येत, तदा तत्त्वमसीति सदात्मकतया प्रत्यगात्मानुसन्धानस्य मोक्षसाधनत्वोपदेशो नोपपद्यते। अन्यथा, अचेतनापत्तिरेव मोक्षः स्यात्। प्रधानकारणवादिनामपि तन्निष्ठस्य मोक्षो नाभिमतः, त्याज्यत्वादिति भावः॥ ७॥

(क) यदि अचेतनं प्रधानमेवात्र कारणतया विवक्षितं स्यात्। तर्हि, तस्य मोक्षविरोधित्वात् तन्निष्ठावारणाय मुमुक्षुं श्वेतकेतुं प्रति 'हेयत्व-

---

* तदेति ख-पुस्तके नोपलब्धम्।

† मोक्षसाधनस्येति ख०।

‡ त्रयाभिहतेति ख०, ग०।

¶ सदात्मकत्वमिति ख०।

देश्यं स्यात्। नच तत् क्रियते। प्रत्युतोपादेयत्वेनैव, तत्त्वमसि, तस्य तावदेव चिरमित्युपदिश्यते॥

इतश्च न प्रधानम्।

प्रतिज्ञाविरोधात्॥ ९॥

(क) प्रधानकारणत्वे प्रतिज्ञाविरोधश्च भवति। वाक्योपक्रमे ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम्। तच्च कार्यकारणयोरनन्यत्वेन कारणभूतसद्विज्ञानात्* तत्कार्यभूतसचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम्। तत्तु प्रधानकारणत्वे चेतनवर्गस्य प्रधानकार्यत्वाभावात् प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेर्विरुध्यते॥

इतश्च न प्रधानम्।

स्वाप्ययात्॥ १०॥

(ख) तदेव सच्छब्दवाच्यं प्रकृत्याह। स्वप्नान्तं मे सोम्य विजानीहीति, यत्रैतत्पुरुषः स्वपिति नाम, सता सोम्य तदा सम्पन्नो

---

मेव श्रुत्वा उच्येत। नच तथोच्यते। प्रत्युत, तत्त्वमसि श्वेतकेतो इति मोक्षसाधनतया तस्य ध्येयत्वमेवाच उच्यते। ततः 'च' न प्रधानमिति युक्तम्॥ ८॥

(क) प्रधानकारणवादे, येनाश्रुतं श्रुतं भवतीत्यादिकारणविज्ञानेन चिदचिन्मिश्रकृत्स्नकार्यविज्ञानप्रतिज्ञा च विरुध्यते। चेतनवर्गस्य प्रधानकार्यत्वाभावेन तज्ज्ञानेन तज्ज्ञानासम्भवात् न प्रधानं कारणम्॥ ९॥

(ख) स्वप्नान्तं मे सोम्य विजानीहीति, स्वमपीतो भवति, सता सोम्य

---

* सद्विज्ञानादिति ख०। अशुद्धमेतत्।

भवति, स्वमपीतो भवति, तस्मादेनं स्वपितीत्याचक्षते, स्वं ह्यपीतो भवतीति सुषुप्तं जीवं सता सम्पन्नं स्वमपीतः स्वस्मिन् प्रलीन इति व्यपदिशति। प्रलयश्च स्वकारणे * लयः। नचाचेतनं प्रधानं चेतनस्य जीवस्य कारणं भवति। स्वमपीतो भवति, आत्मानमेव जीवोऽपीतो भवतीत्यर्थः। चिदचिच्छरीरकं तदात्मभूतं ब्रह्मैव† जीवशब्देनाभिधीयत इति ‡। नामरूपव्याकरणश्रुत्योक्तं तज्जीवशब्दाभिधेयं ब्रह्म सुषुप्तिकालेऽपि प्रलयकाल इव नामरूपपरिष्वङ्गाभावात् केवलसच्छब्दाभिधेयमिति, सता सोम्य तदा सम्पन्नो भवति, स्वमपीतो भवतीत्युच्यते। तथा समानप्रकरणे नामरूपविभाग¶परिष्वङ्गाभावेन प्राज्ञेनैव परिष्वङ्गात् प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमित्युच्यते§। आमोक्षात् ‖ जीवस्य नामरूपपरिष्वङ्गादेव

---

तदा सम्पन्नो भवतीत्यादिभिः सुषुप्तस्य जीवस्य 'स्वाप्ययः—स्वकारणे लयः श्रूयते। प्रधानस्य कारणत्वे लयश्रुतिर्विरुध्येत। प्रधानस्य जीवकारणत्वाभावात्॥ १०॥

---

* कारणे लय इति ख०।

† ब्रह्मेति क०, ख०।

‡ इति—शब्दः ख-पुस्तके नोपलभ्यते।

¶ विभागेति न पठति ग-पुस्तकम्।

§ तथा समानप्रकरण इत्यादिरुच्यत इत्यन्तः सन्दर्भः ख-पुस्तके लिपिकरप्रमादात् पतित इत्यवधेयम्।

‖ आमोक्षमिति ख०।

हि स्वव्यतिरिक्तविषयज्ञानोदयः । सुषुप्तिकालेऽपि * नामरूपे विहाय सता सम्परिष्वक्ताः पुनरपि जाग्रद्दशायां नामरूपे परिष्वज्य तत्तन्नामरूपा भवन्तीति श्रुत्यन्तरे स्पष्टमभिधीयते। यदा† सुषुप्तः स्वप्नं न कथञ्चन पश्यति, अथास्मिन् प्राण एव ह्येकधा‡ भवति, तस्माद्वा एतस्मा¶दात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते, यथा ते इह व्याघ्रो वा सिंहो वा वृको वा वराहो § वा दंशो वा मशको वा यद्यद्भवति ||, तथा तथा भवतीति च। तथा **, सुषुप्तं जीवं प्राज्ञेनात्मना संपरिष्वक्त इति च वदति । तस्मात् सच्छब्दवाच्यं परं ब्रह्म सर्वज्ञः परमेश्वरः पुरुषोत्तम एव। तदाह वृत्तिकारः—सता सोम्य तदा सम्पन्नो भवतीति सम्पत्त्यसम्पत्तिभ्यामेतदध्यवसीयते। प्राज्ञेनात्मना सम्परिष्वक्त इति चाहेति ॥

इतश्च न प्रधानम् ।

## गतिसामान्यात् ॥ ११ ॥

(क) आत्मा वा इदमेक एवाग्र आसीत्, नान्यत्किञ्चन

---

(क) तस्माद्वा एतस्मादात्मन आकाशः सम्भूतस्तथा यः सर्वज्ञः सर्व-

---

* अपीति न दृश्यते ख-पुस्तके। अपि हीति ग० ।

† यथेति ख० । असाम्प्रदायिकोऽयं पाठः ।

‡ एवैकधेति ख०, ग० ।

¶ एतस्मादिति ग-पुस्तके नोपलभ्यते ।

§ वाराह इति क०, ख० ।

|| यद्यद्भवन्ति, तथा तथा भवन्तीति ख० ।

** यथेति ख० ।

मिषत्, स ऐक्षत लोकान्नु सृजा इति, स इमांल्लोकानसृजत, तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी, तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतत् यदृग्वेद इत्यादिसृष्टिवाक्यानां या 'गतिः—प्रवृत्तिस्तत्'सामान्यात्'—तत्समानार्थत्वात् अस्य तेषु सर्वेषु सर्वेश्वरः* कारणमवगम्यते। तस्मादत्रापि सर्वेश्वरः कारणमिति निश्चीयते॥

इतश्च न प्रधानम्।

## श्रुतत्वाच्च॥ १२॥

(क) 'श्रुतमेवमस्या†मुपनिषदि। अस्य सच्छब्दवाच्यस्यात्मत्वेन नामरूपयोर्व्याकर्तृत्वं‡ सर्वज्ञत्वं सर्वशक्तित्वं सर्वाधारत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्व¶ञ्चानेन जीवेनात्म-

---

वित्, तस्मादेतस्मान्नामरूपमन्नञ्च जायते। इत्याद्युपनिषद्वाक्येषु सर्वत्रैव चेतनैककारणत्वस्य 'गतेः—अवगमादस्यापि 'सामान्यात्'—तत्समानार्थत्वाच्चेतनं ब्रह्मैव कारणतया प्रतिपाद्यते। नहि तार्किकाणामिव वेदान्तशास्त्रस्य भिन्ना कारणावगतिः। यया प्रधानस्यापि क्वचित् कारणत्वं वक्तुं शक्येत॥११॥

(क) अस्यामेव उपनिषदि, सच्छब्दवाच्यपरमेश्वरस्यैव, आत्मन एवेदं सर्वमित्यात्मत्वेन सर्वकारणत्वस्य 'श्रुतत्वात्'। 'च' शब्दादुपनिषदन्तरेऽपि,

---

* ईश्वर इति ख०।

† श्रुतमेव ह्यस्यामिति ख०। श्रुतमेवं ह्यस्यामिति ग०।

‡ नामरूपव्याकर्तृत्वमिति ख०।

¶ सत्यसङ्कल्पत्वमिति न लभ्यते ग-पुस्तके।

नानुप्रविश्य नामरूपे व्याकरवाणि, सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः, ऐतदात्म्यमिदं सर्वं, तत्सत्यं, स आत्मा, यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्, तस्मिन् कामाः समाहिताः, एष आत्मा अपहतपाप्मा विजरो विमृत्युः विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प इति। तथा च श्रुत्यन्तराणि।

न तस्य कश्चित् पतिरस्ति लोके
न चेशिता नैव च तस्य लिङ्गम्।
स कारणं करणाधिपाधिपो
नचास्य कश्चिज्जनिता नचाधिपः॥
सर्वाणि रूपाणि विचिन्त्य धीरो
नामानि कृत्वाभिवदन् यदास्ते।

अन्तःप्रविष्टः शास्ता जनानां, सर्वात्मा, विश्वात्मानं परायणं पतिं विश्वस्यात्मेश्वरं, शाश्वतं शिवमच्युतम्।

यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥

एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायण

---

स कारणं करणाधिपाधिप इत्यादिना तथैवश्रवणादपि। अतः, सदेव सोम्येदमित्यादिजगत्कारणवादिवेदान्तवाक्यवेद्यं न प्रधानम्। किन्तु सर्वज्ञः सर्वशक्तिः समस्तकल्याणगुणाकरः पुरुषोत्तम एव परं ब्रह्मेति सिद्धम्। एतेन जिज्ञास्यस्य ब्रह्मणः पारमार्थिकमुख्येक्षितृत्वादिगुणयोगित्वादिः श्रुतिमुखेन प्रतिपादितत्वात् प्रधानकारणवाद इव निर्विशेषचिन्मात्रब्रह्मवादोऽपि सूत्रकारेण निरस्त इति वेदितव्यम्॥ १२॥

एव निखिलजगदेककारणमित्यादीनि। तस्माज्जगत्कारणवादिवाक्यं न *प्रधानप्रतिपादनयोग्यम्। अतः सर्वज्ञः सर्वशक्तिः सर्वेश्वरः निरस्तसमस्तदोषगन्धोऽनवधिकातिशयासंख्येयकल्याणगुणगणमहार्णवः† पुरुषोत्तमो नारायण एव निखिलजगदेककारणं जिज्ञास्यं ब्रह्मेति स्थितम्॥

अत एव निर्विशेषचिन्मात्रब्रह्मवादोऽपि सूत्रकारेण आभिः श्रुतिभि‡र्निरस्तो वेदितव्यः। पारमार्थिक¶मुख्येक्षणादिगुणयोगि जिज्ञास्यं ब्रह्मेति स्थापनात्। निर्विशेषवादे हि साक्षित्वमप्यपारमार्थिकम्। वेदान्तवेद्यं ब्रह्म च जिज्ञास्यतया प्रतिज्ञातम्§। तच्च चेतनमितीक्षतेर्नाशब्दमित्यादिभिः सूत्रैः प्रतिपाद्यते। चेतनत्वं नाम चैतन्यगुणयोगः। अत ईक्षणगुणविरहिणः प्रधानतुल्यत्वमेव। किञ्च, निर्विशेषप्रकाशमात्रब्रह्मवादे तस्य प्रकाशत्वमपि दुरुपपादम्‖। प्रकाशो हि नाम ** स्वस्य परस्य च व्यवहारयोग्यतामापादयन् वस्तुविशेषः। निर्विशेषस्य वस्तुनस्तदुभयरूपत्वाभावात् घटादिवदचित्त्वमेव। तदुभयरूपत्वाभावेऽपि तत्क्षमत्वमस्तीति चेत्, न। तत्क्षमत्वं हि तत्सामर्थ्यमेव। सामर्थ्यगुणयोगे हि निर्विशेषवादः परित्यक्तः

---

* प्रधानादीति ग०।

† गुणमहार्णव इति ग०।

‡ सूत्रकारेणाभिहितश्रुतिभिरिति ख०।

¶ पारमार्थिकमिति ख०। पाठोऽयं नास्मभ्यं रोचते।

§ प्रतिज्ञातश्चेति ख०, ग०।

‖ दुरुपपाद्यमिति ख०।

** नामेत्यत्र तावदिति पठति ख-पुस्तकम्।

स्यात् । अथ श्रुतिप्रामाण्यादयमेको विशेषोऽभ्युपगम्यत इति चेत् । हन्त तर्हि तत एव सर्वज्ञता* सर्वशक्तित्वं सर्वेश्वरत्वं सर्वकल्याणगुणाकरत्वं सकलहेयप्रत्यनीकतेत्यादयः सर्वेऽभ्युपगन्तव्याः । शक्तिमत्त्वञ्च † कार्यविशेषानुगुणत्वम् । तच्च कार्यविशेषैकनिरूपणीयम् । कार्यविशेषस्य निष्प्रमाणकत्वे तदेकनिरूपणीयं शक्तिमत्त्वमपि निष्प्रमाणकं स्यात् । किञ्च, निर्विशेषवस्तुवादिनो वस्तुत्वमपि निष्प्रमाणकम् । प्रत्यक्षानुमानागमजन्यानुभवाः सविशेषविषया ‡ इति पूर्वमेवोक्तम् । तस्माद्विचित्रचेतनाचेतनात्मकजगद्रूपेण, बहु स्यामितीक्षणक्षमः पुरुषोत्तम एव जिज्ञास्यं ब्रह्मेति सिद्धम् ॥

एवं जिज्ञास्यस्य ¶ तस्य ब्रह्मणश्चेतनभोग्यभूतजडरूपसत्त्वरजस्तमोमयप्रधानात् व्यावृत्तिरुक्ता । इदानीं कर्मवश्यात् त्रिगुणात्मकप्रकृतिसंसर्गनिमित्तनानाविधानन्तदुःखसागरनिमज्जनेनाशुद्धात् शुद्धाच्च प्रत्यगात्मनोऽन्यन्निखिलहेयप्रत्यनीकं निरतिशयानन्दं ब्रह्मेति प्रतिपाद्यते ।

## आनन्दमयोऽभ्यासात् ॥ १२ ॥

(क) तैत्तिरीया अधीयते । स वा एष पुरुषोऽन्नरसमय इति

---

(क) तैत्तिरीयके, तस्माद्वा एतस्मादात्मनः आकाशः सम्भूत इति प्रकृत्य, तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयस्तेनैष

---

* सर्वसत्तेति ख० ।

† शक्तिविशेषत्वञ्चेति ख० । असमीचीनमेतत् ।

‡ —स्वानुभवाः सविशेषगोचरा इति ग० ।

¶ जिज्ञासितस्येति ख० । जिज्ञासितव्यस्येति ग० ।

प्रकृत्य, तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा आनन्दमय इति। तत्र सन्देहः। किमयमानन्दमयो बन्धमोक्षभागिनः प्रत्यगात्मनो जीवशब्दाभिलपनीयादन्यः परमात्मा, उत स

---

पूर्ण इत्यत्र जगत्कारणतया अवगत आनन्दमयशब्दवाच्यः किं प्रत्यगात्मा, उत परमात्मेति संशयः। प्रत्यगात्मेति पूर्वः पक्षः। कुतः। तस्यैष एव शारीर आत्मेत्यानन्दमयस्य शरीरसम्बन्धित्वश्रवणात्। तच्च प्रत्यगात्मन एव युक्तम्। अन्नमयादिगौणार्थप्रवाहपतितत्वाच्च। तस्य चेतनत्वेन इच्छापूर्विका च सृष्टिरप्युपपद्यते। किञ्च। अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्तामिति श्रुत्यन्तरे आनन्दमयस्य शोध्यत्वश्रवणात्। नित्यशुद्धस्य परमात्मनः शोध्यत्वासम्भवात्। अत्र राद्धान्तः। आनन्दमयः परमात्मा। कुतः। यद्येष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयति, आनन्दो ब्रह्मेति व्यजानादित्यादिना तत्रैवानन्दशब्दस्य बहुकृत्वोऽभ्यस्यमानत्वात्। सैषानन्दस्य मीमांसा भवतीत्यारभ्य, आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेत्यन्तस्य वाक्यस्य ब्रह्मानन्द एव निरतिशयत्वापरिमितत्वप्रतिपादनेन समाप्तिदर्शनाच्च। शारीरात्मत्वञ्च परमात्मन एव। यस्य पृथिवी शरीरमित्यारभ्य एष सर्वभूतान्तरात्मापहतपाप्मेति सर्वेष्वपि अन्नमयादिषु नियन्तृत्वेन तस्य वर्तमानत्वात्। आनन्दमये तु, तस्यैष एव शारीर आत्मा यः पूर्वस्येति निर्देशस्तस्य अनन्यात्मत्वं प्रदर्शयति। आत्मान्तरानिर्देशात्। नाप्यन्नमयादिगौणार्थप्रवाहपतितत्वात् तस्यापि गौणत्वं निर्णेतुं शक्यम्। तस्य सर्वान्तरत्वेन सर्वपरत्वेन च प्रतिपादितत्वात्। शुध्यन्तामित्यस्य प्रसाध्यन्तामित्यर्थः। अतः जगत्कारणतया निर्दिष्ट आनन्दमयः परमात्मेति सिद्धम्॥ १। १। अ० ६॥

(सूत्रार्थस्तु।) प्रधानादर्थान्तरभूतस्य प्रत्यगात्मनश्चेतनस्य ईक्षणायोगसम्भवेऽपि बन्धमोक्षभागिनस्तस्य न आनन्दमयशब्दवाच्यत्वं जगत्कार-

एवेति। किं युक्तं, प्रत्यगात्मेति। कुतः। तस्य एष एव शारीर *आत्मेत्यानन्दमयस्य शारीरत्वश्रवणात्। शारीरो हि शरीर-सम्बन्धी जीवात्मा। ननु च जगत्कारणतया प्रतिपादितस्य ब्रह्मणः सुखप्रतिपत्त्यर्थमन्नमयादीननुक्रम्य तदेव जगत्कारण-मानन्दमय इत्युपदिश्यति। जगत्कारणञ्च, तदैक्षतेति† श्रवणात् सर्वज्ञः सर्वेश्वर इत्युक्तम्। सत्यमुक्तम्। स तु जीवान्नातिरि-च्यते। अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि, तत्त्व-मसि‡ श्वेतकेतो इति कारणतया निर्दिष्टस्य जीवसामाना-धिकरण्यनिर्देशात्। सामानाधिकरण्यं हि एकत्वप्रतिपादन-परम्। यथा, सोऽयं देवदत्त इत्यादौ। ईक्षापूर्विका च सृष्टि-श्चेतनस्य जीवस्योपपद्यत एव। अतो ब्रह्मविदाप्नोति परमिति जीवस्याचित्संसर्गवियुक्तं स्वरूपं प्राप्यतयोपक्रान्तमानन्दमय ¶ इत्युपदिश्यते। अचिद्वियुक्तस्य § स्वरूपस्य लक्षणमिदमुच्यते, सत्यं ज्ञानमनन्तं ब्रह्मेति। तद्रूपप्राप्तिरेव हि मोक्षः। न ह वै

---

शत्वञ्चेति निर्णीयते। 'आनन्दमय'-शब्दनिर्दिष्ट आकाशादिजगत्कारणभूतः प्रत्यगात्मनोऽर्थान्तरः परमात्मैव। कुतः। 'अभ्यासात्'। तत्रैव आनन्द-शब्दस्य बहुकृत्वोऽभ्यस्यमानत्वात्। स एको मानुष आनन्दस्ते ये शत-मित्यस्यानन्दस्य च निरतिशयत्वापरिमितत्वप्रतीतिबलात् प्रत्यागात्मन्य-सम्भावितत्वेन तदतिरिक्ते परमात्मन्येव सम्भवात्॥ १३॥

---

* शरीर इति ख०। अयुक्तमेतत्।

† ईक्षतिश्रवणादिति ख०।

‡ तत्त्वमसीति कारणतयेति ग०।

¶ उपक्रान्तमानन्दमय इत्यंशः ख-ग-पुस्तकयोर्नोपलभ्यते।

§ अचिद्वियुक्तस्वरूपस्येति ख०, ग०।

सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति। अतो जीवस्याविद्याविमुक्तं स्वरूपं प्राप्यतया प्रक्रान्तमानन्दमय इत्युपदिश्यते। तथा हि, शाखाचन्द्रन्यायेनात्मस्वरूपं दर्शयितुमन्नमयः पुरुषः इति प्रथमं शरीरं निर्दिश्य तदन्तरभूतं तस्य धारकं पञ्चवृत्तिप्राणं तस्याप्यन्तरभूतं मनः, * तदन्तरभूताञ्च बुद्धिं, प्राणमयो मनोमयो विज्ञानमय इति तत्र तत्र बुद्ध्यवतरणक्रमेण निर्दिश्य सर्वान्तरभूतं जीवात्मानम्, अन्योऽन्तर आत्मानन्दमय इत्युपदिश्य, अन्तरात्म-परम्परां समापयति। अतो जीवात्मस्वरूपमेव † ब्रह्मविदाप्नोतीति प्रक्रान्तं ब्रह्म तदेवानन्दमय इत्युपदिष्टमिति निश्चीयते॥

ननु, ब्रह्म पुच्छं प्रतिष्ठेत्यानन्दमयादन्यत् ब्रह्मेति प्रतीयते। नैवम्। ब्रह्मैव स्वस्वभावविशेषेण‡ पुरुषविधत्वरूपितं¶ शिरःपक्षपुच्छरूपेण व्यपदिश्यते। यथान्नमयो देह एव स्वस्मादनतिरिक्तस्यावयवैरिव, तस्येदमेव शिर इत्यादिना शिरःपक्षपुच्छा अवयवतया§ निदर्शिताः। तथा आनन्दमयं ब्रह्मापि स्वस्मादनतिरिक्तैः प्रियादिभिर्निदर्शितम्‖। तत्रावयवत्वेन रूपि-

---

* तदन्तरभूतं मन इति ख-पुस्तके लिपिकरप्रमादात् पतितमित्यवगन्तव्यम्। ग-पुस्तकन्तु सर्वत्र अन्तरशब्दस्थाने अन्तरिति पठति।

† जीवात्मा स्वरूपमिति ग०।

‡ स्वभावविशेषेणेति ख०, ग०।

¶ पुरुषविधनिरूपितमिति ख०।—स्वरूपितमिति ग०। पूर्वन्न समीचीनतया न प्रतिभाति।

§ पुच्छवत्तयेति ख०। पुच्छपक्षवत्तयेति ग०।

‖ दर्शितमिति ख०।

तानां प्रियमोदप्रमोदानन्दानामाश्रयतया अखण्ड*मानन्दमयं ब्रह्म पुच्छं प्रतिष्ठेत्युच्यते। यदि चानन्दमयादन्यत् ब्रह्म भविष्यत्। तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्मेत्यपि निरदेक्ष्यत्। नचैवं निर्दिश्यते†। एतदुक्तं भवति। ब्रह्मविदाप्नोति परमिति प्रक्रान्तं ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणतः सकलेतरव्यावृत्ताकारं प्रतिपाद्य तदेव‡, तस्माद्वा एतस्मादात्मन इत्यात्मशब्देन निर्दिश्य तस्य सर्वान्तरात्मकत्वेना¶त्मत्वं व्यञ्जयद्वाक्यमन्नमयादिषु तत्तदन्तरात्मकत्वेन§ निर्दिष्टान् प्राणमयादीनतिक्रम्यान्योऽन्तर आत्मा आनन्दमय इत्यात्मशब्देन निर्देशमानन्दमये समापयति। अतः, आत्मशब्देन प्रक्रान्तं ब्रह्मानन्दमयमिति निश्चीयत इति‖॥

ननु च, ब्रह्म पुच्छं प्रतिष्ठेत्युक्त्वा,—

असन्नेव स भवति असद्ब्रह्मेति वेद चेत्।
अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः॥

इति ब्रह्मज्ञानाज्ञानाभ्यामात्मनः सद्भावासद्भावौ दर्शयति, नानन्दमयज्ञानाज्ञानाभ्याम्। न चानन्दमयस्य प्रियमोदादिरूपेण सर्वलोकविदितस्य सद्भावासद्भावज्ञानाज्ञानशङ्का** युक्ता।

---

* अखण्डानन्दमयमिति ख०।

† इतरदेवेतेति ख०। नितरामयुक्तमेतत्।

‡ तद्वदिति ख०।

¶ सर्वान्तरत्वेनेति ग०।

§ तत्तदन्तरतयात्मत्वेनेति ख०, ग०।

‖ निर्देशमित्यादिः प्रक्रान्तमित्यन्तः पाठः ख-पुस्तके न दृश्यते।

**सद्भावज्ञानाज्ञानशङ्केति ख०। सद्भावासद्भावाज्ञानशङ्केति ग०। न समीचीनमेतत्।

अतो नानन्दमयमधिकृत्यायं श्लोक उदाहृतः। तस्मादानन्दमयादन्यत् ब्रह्म। नैवम्। इदं पुच्छं प्रतिष्ठा, पृथिवी पुच्छं प्रतिष्ठा, अथर्वाङ्गिरसः पुच्छं प्रतिष्ठेत्येवमुक्त्वा तत्र तत्रोदाहृताः, अन्नाद्वै प्रजाः प्रजायन्त इत्यादयः श्लोकाः यथा न पुच्छमात्रप्रतिपादनपराः, अपि त्वन्नमयादिपुरुषमात्रप्रतिपादनपराः। एवमत्राप्यानन्दमयस्यायमसन्नेवेति श्लोको नानन्दमयव्यतिरिक्तस्य पुच्छस्य*। आनन्दमयस्यैव ब्रह्मत्वेऽपि प्रियमोदादिरूपेण रूपितस्यापरिच्छिन्नानन्दस्य सद्भावासद्भावज्ञानाज्ञानां शङ्का युक्तैव। पुच्छब्रह्मणोऽप्यपरिच्छिन्नानन्दतयैव ह्यप्रसिद्धता। शिरःप्रभृत्यवयवत्वाभावात् ब्रह्मणो नानन्दमयं ब्रह्मेति चेत्, पुच्छत्वप्रतिष्ठात्वा‡भावात् पुच्छमपि ब्रह्म न भवेत्। अथाविद्यापरिकल्पितस्य वस्तुनस्तस्याप्याश्रयभूतत्वात् ब्रह्मणः पुच्छं प्रतिष्ठेति रूपण¶मात्रमित्युच्येत। हन्त तर्ह्यसुखात् व्यावृत्तस्यानन्दमयस्य ब्रह्मणः प्रियशिरस्त्वादिरूपणं भविष्यति। एवञ्च, सत्यं ज्ञानमनन्तं ब्रह्मेति विकारास्पदजडपरिच्छिन्नवस्त्वन्तरात् व्यावृत्तस्यासुखात् व्यावृत्तिरानन्दमय इत्युपदिश्यते§। ततश्चाखण्डैकरसानन्दरूपे ब्रह्मण्यानन्दमय इति मयट्, प्राण-

---

* पुच्छस्येति न पठति ख-पुस्तकम्।

† ज्ञानाज्ञानाशङ्केति ख०।

‡ प्रतिष्ठत्वाभावादिति ख०, ग०।

¶ रूपमात्रमिति ख०, ग०।

§ —वस्त्वन्तरव्यावृत्तस्यानन्दमयस्य ब्रह्मण इत्युपदिश्यते इति ख०। पाठोऽयं सुमनसां वैमनस्यमावहति।

मय इव स्वार्थिको द्रष्टव्यः। तस्मादविद्यापरिकल्पितविविध-विचित्रदेवादिभेदभिन्नस्य जीवात्मनः स्वाभाविकं स्वरूप* मखण्डैकरसं सुखैकतानमानन्दमय, इत्युच्यत इत्यानन्दमयः' प्रत्यगात्मा इति॥

एवं प्राप्ते प्रचक्ष्महे। 'आनन्दमयोऽभ्यासात्'। 'आनन्दमयः' परमात्मा। कुतः, 'अभ्यासात्'। सैषानन्दस्य मीमांसा भवतीत्यारभ्य, यतो वाचो निवर्तन्त इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण निरतिशयदशा† शिरस्कोऽभ्यस्यमान आनन्दोऽनन्तदुःखमिश्रपरिमितसुखलवभागिनि जीवात्मन्यसम्भवन्निखिलहेयप्रत्यनीककल्याणैकतानसकलेतरविलक्षणं परमात्मानमेव स्वाश्रयमावेदयति। यदाह,‡ तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय इति। विज्ञानमयो हि जीवः, न बुद्धिमात्रं, मयट्प्रत्ययेन व्यतिरेकप्रतीतेः। प्राणमये त्वगत्या स्वार्थिकताश्रीयते। इह तु तद्वतो जीवस्य सम्भवान्नानर्थकत्वं न्याय्यम्। बद्धो मुक्तश्च प्रत्यगात्मा, ज्ञोऽत¶ एवेत्यभ्यधीमहि। प्राणमयादौ तु मयडर्थासम्भवोऽनन्तरमेव वक्ष्यते। कथं तर्हि विज्ञानमयविषयश्लोके, विज्ञानं यज्ञं तनुत इति केवलविज्ञानशब्दोपादानमुपपद्यते। ज्ञातुरेवात्मनः स्वरूपमपि स्वप्रकाशतया विज्ञानमित्युच्यत इति न दोषः। ज्ञानैकनिरूपणीयत्वाच्च

---

* जीवात्मन एकरूपमिति ग०। स्वाभाविकं रूपमिति ग०।

† दशशिरस्क इति ख०। अयुक्तमिदम्।

‡ तथा हीति ग०।

¶ ज्ञायत इति ख०। ज्ञानैरिति ग०।

ज्ञातुः स्वरूपस्य स्वरूपनिरूपणधर्मशब्दा हि धर्ममुखेन धर्मिस्वरूपमपि प्रतिपादयन्ति,* गवादिशब्दवत्। कृत्यल्युटो बहुलमिति वा कर्तरि ल्युडाश्रीयते। नन्द्यादित्वं वाश्रित्य नन्दिग्रहेत्यादिना कर्तरि ल्युः। अत एव, विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चेति यज्ञादिकर्तृत्वं विज्ञानस्य श्रूयते। नच बुद्धिमात्रस्य कर्तृत्वं† सम्भवति। अचेतनेषु हि चेतनोपकरणभूतेषु विज्ञानमयात् प्राचीनेष्वन्नमयादिषु न चेतनधर्मभूतं कर्तृत्वं श्रूयते। अत एव च, चेतनमचेतनञ्च स्वासाधारणैर्निलयनत्वानिलयनत्वादिभिर्धर्मविशेषैर्विभज्य निर्दिशद्वाक्यं, विज्ञानञ्चाविज्ञानञ्चेति विज्ञानशब्देन तद्गुणं चेतनं वदति। तथान्तर्यामिब्राह्मणे, यो विज्ञाने तिष्ठन्नित्यस्य काण्वपाठगतस्य पर्यायस्य स्थाने, य आत्मनि तिष्ठन्निति पर्यायमधीयाना माध्यन्दिनाः काण्वपाठगतविज्ञानशब्दनिर्दिष्टो जीवात्मेति स्फुटीकुर्वन्ति। विज्ञानमिति च नपुंसकलिङ्गं वस्तुत्वाभिप्रायम्। तदेवं विज्ञानमयात् जीवादन्यस्तदन्तरः¶ परमात्मा 'आनन्दमयः'। यद्यपि, विज्ञानं यज्ञं तनुत इति श्लोके ज्ञानमात्र§मेवोपादीयते, न ज्ञाता। तथाप्यन्योऽन्तर आत्मा विज्ञानमय इति तद्वान् ज्ञातैवोपदिश्यते। यथा, अन्नाद्वै प्रजाः प्रजायन्त इत्यत्र श्लोके केव-

---

* शब्दः...प्रतिपादयतीति क०, ख०।

† बुद्धिमात्रस्य कर्तृत्व' नेति ग०।

‡ सचेतनेष्विति ख०। अयुक्तमेतत्।

¶ तदन्तर इति न पठ्यते ख-पुस्तके।

§ श्लोकेनेति ग०।

त्मानोपादानेऽपि, स वा एष पुरुषोऽन्नरसमय इत्यत्र नान्नमात्रं निर्दिष्टम्। अपि तु, तन्मयस्तद्विकारः *। एतत्सर्वं हृदि निधाय सूत्रकारः स्वयमेव, भेदव्यपदेशादित्यनन्तरमेव वदति ॥

यदुक्तं, जगत्कारणतया निर्दिष्टस्य, अनेन जीवेनात्मनानुप्रविश्य, तत्त्वमसीति जीवसामानाधिकरण्यनिर्देशात् जगत्कारणमपि जीवस्वरूपान्नातिरिच्यत इति कृत्वा जीवस्यैव स्वरूपम्, ब्रह्मविदाप्नोति परमिति प्रक्रान्तम्। अस्तुत्वात् व्यावृत्तत्वेनानन्दमय इत्युपदिश्यत इति। तदयुक्तम्। जीवस्य चेतनत्वे सत्यपि, तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजतेति स्वसंकल्पपूर्वकानन्तविचित्र†सृष्टियोगानुपपत्तेः। शुद्धावस्थस्यापि हि तस्य सर्गादिजगद्व्यापारासम्भवः‡, जगद्व्यापारवर्जं, भोगमात्रसाम्यलिङ्गादित्यत्रोपपादयिष्यते। कारणभूतस्य ब्रह्मणो जीवस्वरूपत्वानभ्युपगमे, अनेन जीवेनात्मना, तत्त्वमसीति सामानाधिकरण्यनिर्देशः कथमुपपद्यत इति चेत्। कथं वा निरस्तनिखिलदोषगन्धस्य सत्यसंकल्पस्य सर्वज्ञस्य सर्वशक्तेरनवधिकातिशयासंख्येयकल्याणगुणस्य सकलकारणभूतस्य¶ ब्रह्मणो नानाविधानन्तदुःखाकरकर्माधीनचिन्तितनिमिषितादिसकलप्रवृत्तिजीवस्वरूपत्वम्। अन्यतरस्य मिथ्यात्वेनोपपद्यत इति चेत्। कस्य भोः। किं

* तदन्नमय इति ख०।

† विविधविचित्रेति ख०।

‡ जगद्व्यापारासम्भव इति न दृश्यते ख-पुस्तके। पतित एवैष पाठ इति मा विस्मर्तव्यम्।

¶ सकलभूतकारणस्येति क०, ख०।

हेयसम्बन्धस्य, किं वा हेयप्रत्यनीककल्याणैकतानस्वभावस्य। हेयप्रत्यनीककल्याणैकतानस्य ब्रह्मणोऽनाद्यविद्याश्रयत्वेन हेयसम्बन्धप्रतिभासो मिथ्यारूप इति चेत्। विप्रतिषिद्धमिदमभिधीयते। ब्रह्मणो हेयप्रत्यनीककल्याणैकतानत्वमनाद्यविद्याश्रयत्वेनानन्तदुःखविषयमिथ्याप्रतिभासाश्रयत्वञ्चेति। अविद्याश्रयत्वं तत्कार्यदुःखप्रतिभासाश्रयत्वञ्चैव हि * हेयसम्बन्धः। तत्सम्बन्धित्वं तत्प्रत्यनीकत्वञ्च † विरुद्धमेव। तथापि तस्य मिथ्यात्वान्न विरोध इति मा वोचः। मिथ्याभूतमप्यपुरुषार्थ एव, यन्निरसनाय सर्वे वेदान्ता आरभ्यन्ते इति ब्रूषे। निरसनीयापुरुषार्थयोगश्च हेयप्रत्यनीककल्याणैकतानतया विरुध्यते। किं कुर्मः। येनाश्रुतं श्रुतं भवतीत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय, सदेव सोम्येदमग्र आसीदित्यादिना निखिलजगदेककारणतां, तदैक्षत बहु स्यामिति सत्यसङ्कल्पताञ्च सर्वज्ञस्य सर्वशक्तेरनवधिकातिशया सङ्ख्येय‡कल्याणगुणस्य सकलकारणभूतस्य¶ ब्रह्मणः प्रतिपाद्य तस्यैव ब्रह्मणः तत्त्वमसीति सामानाधिकरण्येनानन्तदुःखाश्रयजीवैक्यं § प्रतिपादितम्। तदन्यथानुपपत्त्या ब्रह्मण एवाविद्याश्रयत्वादि परिकल्पनीय‖मिति चेत्। श्रुतोपपत्तयेऽप्यनुपपन्नं

* अविद्याश्रयत्वं तत्कार्यदुःखप्रतिभासाश्रयत्वञ्चैव हीति सन्दर्भः ख-ग-पुस्तकयोर्नोपलभ्यते।

† तत्प्रत्यनीकञ्चेति ख०। हेयप्रत्यनीकत्वञ्चेति ग०।

‡ —असंख्येयेति ख०।

¶ सर्वज्ञस्येत्यादिः—सर्वकारणभूतस्येत्यन्तः पाठः ग—पुस्तके न दृश्यते।

§ जीवत्वमिति ग०।

‖ परिकल्पितमिति ग०।

विरुद्धञ्च न कल्पनीयम् । अथ हेयसम्बन्ध एव पारमार्थिकः । कल्याणैकतानस्वभावता तु मिथ्याभूता । इत्येवं तापत्रयाभिहतचेतनोज्जिजीविषया प्रवृत्तं शास्त्रं तापत्रयाभिहतिरेवास्य पारमार्थिकी, कल्याणैकतानस्वभावस्तु भ्रान्तिपरिकल्पित इति बोधयत् सम्यगुज्जीवयति ॥

अथैतद्दोषपरिजिहीर्षया ब्रह्मणो निर्विशेषचिन्मात्रस्वरूपा*तिरिक्तजीवत्वदुःखित्वादिकं, सत्यसंकल्पत्वकल्याणगुणाकरत्वजगत्कारणत्वाद्यपि मिथ्याभूतमिति कल्पनीयमिति चेत् । अहो भवतां वाक्यार्थपर्यालोचना†कुशलता । एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातं ‡, सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावात् न सम्पत्स्यते । यथैकविज्ञानं परमार्थविषयं, तथैव सर्वविज्ञानमपि यदि परमार्थविषयं तदन्तर्गतञ्च, तदा तज्ज्ञानेन सर्वविज्ञानमिति शक्यते वक्तुम् । न हि परमार्थशुक्तिकाज्ञानेन¶ तदाश्रयमपरमार्थरजतज्ञानं§ भवति ॥

अथोच्येत् । एकविज्ञानेन सर्वविज्ञान‖प्रतिज्ञाया अयमर्थः । निर्विशेषसन्मात्रमेव ** सत्यमन्यदसत्यमिति । तर्हि, येना-

* स्वरूपत्वातिरिक्तेति ख० ।

† वाक्यार्थालोचनेति ।

‡ सर्वज्ञानप्रतिज्ञानमिति ग० ।

¶ शुक्तिज्ञानेनेति ख० । अयुक्तमेतत् ।

§ रजतं ज्ञातमिति ख०, ग० ।

‖ सर्वविज्ञानेति नोपलभ्यते ख-पुस्तके । लिपिकरप्रमाद एवात्र बीजम् ।

** वस्तुमात्रमिति ग० ।

श्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति न श्रूयेत। येन श्रुतेनाश्रुतमपि श्रुतं भवतीति तस्य* वाक्यस्यार्थः। कारणतयोपलक्षितनिर्विशेषवस्तुमात्रस्यैव सद्भावश्चेत् प्रतिज्ञातः, यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातमिति दृष्टान्तोऽपि न घटते। मृत्पिण्डविज्ञानेन हि तद्विकारस्य ज्ञातता† निदर्शिता। तत्रापि विकारस्य सत्यताभिप्रेतेति‡ चेत्। मृद्विकारस्य रज्जुसर्पादिवदसत्यत्वं शुश्रूषोरप्रसिद्ध¶मिति प्रतिज्ञातार्थसम्भावनाप्रदर्शनाय§, यथा सोम्येति प्रसिद्धवदुपन्यासो न युज्यते। नच तत्त्वमस्यादिवाक्यजन्यज्ञानोत्पत्तेः प्राग्विकारजातस्यासत्यतामापादयत् तर्कानुगृहीत‖मननुगृहीतं वा प्रमाणमुपलभामह इत्ययमर्थः, तदनन्यत्वमारम्भणशब्दादिभ्य इत्यत्र वक्ष्यते। तथा, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं, तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत, हन्ताहमिमास्तिस्रो देवताः, अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि, सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः, ऐतदात्म्यमिदं सर्वमित्यादिनास्य जगतः सदात्मकता सृष्टेः पूर्वकाले नामरूपविभागाग्रहणं जगदुत्पत्तौ सच्छब्द-

---

* त्यस्येति ख०, ग०।

† ज्ञानतेति ख०। लिपिकरप्रमादविजृम्भणमेतत्।

‡ अभिहितेति ख०।

¶ असिद्धमिति ख०, ग०।

§ प्रतीतार्थसम्भावनायेति ख०।

‖ तर्केणानुगृहीतमिति ख०।

वाच्यस्य ब्रह्मणः स्वव्यतिरिक्तनिमित्तान्तरानपेक्षत्वम्। सृष्टिकाले अहमेवानन्तस्थिरत्रसरूपेण* बहु स्यामित्यनन्यसाधारणः संकल्पविशेषो, यथासंकल्पमनन्तविचित्रतत्त्वानां विलक्षणाक्रमविशेषविशिष्टा सृष्टिः, समस्तेष्वचेतनेषु वस्तुषु‡ स्वात्मकजीवानुप्रवेशेनानन्तनामरूपव्याकरणं, स्वव्यतिरिक्तस्य समस्तस्य स्वमूलत्वं स्वायतनत्वं¶ स्वप्रवर्त्यत्वं स्वेनैव जीवनं स्वप्रतिष्ठत्वमित्याद्यनन्तविशेषाः शास्त्रैकसमधिगम्याः प्रतिपादिताः। तत्सम्बन्धितया प्रकरणान्तरेष्वप्यपहतपाप्मत्वादिनिरस्तनिखिलदोषतासर्वज्ञतासर्वैश्वरत्वसत्यकामत्वसत्यसंकल्पत्वसर्वानन्दकरणनिरतिशयानन्दादयः सकलेतरप्रमाण§विषयाः सहस्रशः प्रतिपादिताः‖। एवमनन्यगोचरानन्तविशेषणविशिष्टप्रकृतब्रह्मपरामर्शितच्छब्दस्य निर्विशेषवस्तुमात्रोपदेशपरत्वमसङ्गतत्वेनोन्मत्तप्रलपितम्**। येन†† त्वं-पदञ्च संसारित्वविशिष्टजीववाचि। तस्यापि निर्विशेषस्वरूपोपस्थापनपरत्वे स्वार्थः परित्यक्तः स्यात्। निर्विशेषप्रकाशस्वरूपस्य च वस्तुनो ह्यविद्यया तिरो-

---

* स्थिरचररूपेणेति ख०।

† तत्त्वनानाविचक्षणेति ग०। अयोग्यमिदम्।

‡ वस्तुष्विति ख-पुस्तके नावलोक्यते।

¶ स्वायतनत्वमिति न दृश्यते ख-पुस्तके।

§ प्रमाणाविषमा इति ख०। पाठोऽयं सन्दर्भवैषम्यमावहति।

‖ तत्सम्बन्धितयेत्यादिः—प्रतिपादिता इत्यन्तः पाठः ग-पुस्तके पतित इत्यवधेयम्

** प्रलपितेति ख०, ग०।

†† येनेत्यत्र अथैवेति ख०।

धानं स्वरूपनाशप्रसङ्गादिभिः न सम्भवतीति पूर्वमेवोक्तम्। एवञ्च सति, समानाधिकरणप्रवृत्तयोस्तत्त्वमिति पदयोर्द्वयोरपि मुख्यार्थपरित्यागेन लक्षणा च समाश्रयणीया॥

अथोच्येत। समानाधिकरणप्रवृत्तानामेकार्थप्रतिपादनपरतया विशेषणांशे तात्पर्यासम्भवादेव विशेषणनिवृत्तेर्वस्तुमात्रैकत्वप्रतिपादनात् न लक्षणाप्रसङ्गः। यथा नीलमुत्पलमिति पदद्वयस्य विशेष्यैकत्वप्रतिपादन*परत्वे नीलत्वोत्पलत्वरूपविशेषणद्वयं न विवक्ष्यते। तद्विवक्षायां हि नीलत्वविशिष्टाकारेणोत्पलत्वविशिष्टाकारस्यैकत्वप्रतिपादनं प्रसज्येत†। तत्तु न सम्भवति। नहि नैल्यविशिष्टाकारेण तद्वस्तूत्पलपदेन विशिष्यते, जातिगुणयोरन्योन्यसमवायप्रसङ्गात्। अतो नीलत्वोत्पलत्वोपलक्षित‡वस्त्वैक्यमात्रं सामानाधिकरण्येन प्रतिपाद्यते। तथा¶, सोऽयं देवदत्त इत्यतीतकाल§विप्रकृष्टदेशविशिष्टस्य तेनैव रूपेण सन्निहितदेशवर्तमानकालविशिष्टतया प्रतिपादनानुपपत्तेरुभय‖देशकालोपलक्षितस्वरूपमात्रैक्यं सामानाधिकरण्येन प्रतिपाद्यते। यद्यपि नीलमित्याद्येकपदश्रवणे प्रतीयमानं विशेषणं सामानाधिकरण्यवेलायां विरोधान्न प्रतिपाद्यते।

---

* प्रतिपादनेति न पठति ख-पुस्तकम्। विशेषकप्रतिपादनेति ग०। अयुक्तमिदम्।

† प्रसज्जत इति ख०।

‡ नीलोत्पलत्वोपलक्षितेति ग०।

¶ यथेति ख०।

§ इति तत्कालेति ख०।

‖ उभयेति न पठति ग-पुस्तकम्।

तथापि वाच्येऽर्थे * प्रधानांशस्य प्रतिपादनान्न लक्षणा। अपि तु विशेषणांशस्याविवक्षामात्रम्, सर्वत्र सामानाधिकरण्यस्यैष † स्वभाव इति न कश्चिद्दोष इति। तदिदमसारम्। सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रं प्रत्याय्यम् ‡। तत्र समानाधिकरण¶प्रवृत्तानामपि नीलादिपदानां नैल्यादि-विशिष्ट एवार्थो व्युत्पत्तिसिद्धः पदान्तरार्थसंसृष्टोऽभिधीयते। यथा नीलमुत्पलमानयेत्युक्ते नीलिमादिविशिष्टमेवानीयते। यथा च विन्ध्याटव्यां मदमुदितो मातङ्ग§गणस्तिष्ठतीति पद-द्वयावगतविशेषणविशिष्ट एवार्थः प्रतीयते। एवं वेदान्तवाक्ये-ष्वपि समानाधिकरण‖निर्देशेषु तत्तद्विशेषणविशिष्टमेव ब्रह्म प्रतिपत्तव्यम्। नच विशेषणविवक्षायामितरविशिष्टाकारं वस्त्व-न्येन विशेषितव्यम्। अपि तु सर्वैर्विशेषणैः स्वरूपमेव विशेष्यम्। तथाहि भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामा-नाधिकरण्यम्। अन्वयेन निवृत्त्या वा पदान्तरप्रतिपाद्याकारा-दाकारान्तरयुक्ततया तस्यैव वस्तुनः पदान्तरप्रतिपाद्यत्वं सामा-नाधिकरण्यकार्यम् **। यथा देवदत्तः श्यामो युवा लोहि-

---

* स्वार्थप्रधानस्येति ख०। असमीचीनमिदम्।

† एवेति ग०।

‡ प्राप्यमिति ख०।

¶ सामानाधिकरण्यवृत्तानामिति ख०, ग०।

§ मतङ्गजेति ग०।

‖ सामानाधिकरण्येति ख०, ग०।

** कार्यमिति नेष्यते ख-पुस्तके।

ताचोऽदीनोऽल्पपणोऽनवद्य इति। यत्र त्वेकस्मिन् वस्तुनि समन्वयायोग्यं विशेषणद्वयं समानाधिकरणपद*निर्दिष्टं, तत्राप्यन्यतरत् पदममुख्यवृत्तमाश्रीयते। न द्वयम्†। यथा गौर्वाहक इति। नीलोत्पलादिषु तु विशेषणद्वयान्वयाविरोधादेकमेवोभयविशिष्टं प्रतिपाद्यते॥

अथ मनुषे, एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणं वस्तु विशेषणान्तरप्रतिसम्बन्धित्वादिलक्षणमिति घटपटयोरेवैकविभक्तिनिर्देशेऽप्यैक्यप्रतिपादनासम्भवात् समानाधिकरणशब्दस्य न विशिष्टप्रतिपादनपरत्वम्। अपि तु विशेषणमुखेन स्वरूपमुपस्थाप्य तदैक्यप्रतिपादनपरत्वमेवेति। स्यादेतदेवं, यदि विशेषणद्वयप्रतिसम्बन्धित्वमात्रमेवैक्यं निरुन्ध्यात्। न चैतदस्ति। एकस्मिन्‡ धर्मिण्युपसंहर्तुमयोग्यधर्मद्वयविशिष्टत्वमेव ह्येकत्वं निरुणद्धि। अयोग्यता च प्रमाणान्तरसिद्धा घटत्वपटत्वयोः। नीलमुत्पलमित्यादिषु तु दण्डित्वकुण्डलित्ववत् रूपवत्त्वरसवत्त्वगन्धवत्त्वादिवच्च विरोधो नोपलभ्यते। न केवलमविरोध एव प्रवृत्तिनिमित्तभेदेनैकार्थबोधकत्वरूपं¶ सामानाधिकरण्यमुपपादयत्येव धर्मद्वयविशिष्टताम्। अन्यथा स्वरूपमात्रैक्ये अनेकपदप्रवृत्तौ निमित्ताभावात्§ सामानाधिकरण्यमेव न स्यात्।

---

* सामानाधिकरण्येति ग०।

† न द्वयमिति न पठति ख-पुस्तकम्।

‡ एतस्मिन्निति ग०। असमीचीनमेतत्।

¶ ऐकार्थ्यनिष्ठत्वरूपमिति ग०।

§ प्रवृत्त्यभावादिति ग०।

विशेषणानां स्वसम्बन्धानादरेण वस्तुस्वरूपोपलक्षणपरत्वे सत्येकेनैव वस्तूपलक्षितमित्युपलक्षणान्तरमनर्थकमेव। उपलक्षणान्तरोपलक्ष्याकारभेदाभ्युपगमे तेनाकारेण सविशेषत्वप्रसङ्गः। सोऽयं देवदत्त इत्यत्रापि लक्षणागन्धो न विद्यते*, विरोधाभावात्। देशान्तरसम्बन्धितया अतीतस्य† सन्निहितदेशसम्बन्धितया वर्तमानत्वाविरोधात्। अत एव हि सोऽयमिति प्रत्यभिज्ञया‡ कालद्वयसम्बन्धिनो वस्तुन ऐक्यमुपपाद्यते वस्तुनः स्थिरत्ववादिभिः। अन्यथा प्रतीतिविरोधे सति सर्वेषां क्षणिकत्वमेव स्यात्। देशद्वयसम्बन्धविरोधस्तु कालभेदेन परिह्रियते¶। यतः समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थवाचित्वम्, अत एव अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीत्याद्यारुण्यादिविशिष्टैकहायन्या क्रयसाध्यत्वमभिधीयते§। तदुक्तम्‖। अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः** स्यादिति। तत्र एवं पूर्वपक्षी मन्यते। यद्यप्यरुणयेति†† पदमाकृतिरिव गुणस्यापि द्रव्यप्रकारतयैकस्वभावत्वात् द्रव्यपर्यन्तमेवारुणिमान-

---

* न लक्षणागन्धोऽपि विद्यत इति ख०।

† प्रतीतस्येति क०। तस्येति ख०। अशुद्धमेतत्।

‡ प्रत्यभिज्ञाया इति ख०। अपपाठोऽयम्। प्रत्यभिज्ञायेति ग०।

¶ परिह्रीयत इति ख०, ग०। न समीचीनमिदम्।

§ साध्यता विधीयत इति ग०।

‖ यदुक्तमिति ख०।

** कर्मनियम इति ख०, ग०। न सम्यगेतत्।

†† आरुणेति ख०। एवं परत्रापि।

मभिदधाति, तथाप्येकहायन्यन्वय*नियमोऽरुणिम्नो न सम्भवति। एकहायन्या क्रीणाति†, तच्चारुणयेत्यर्थद्वयविधानासम्भवात्। ततश्चारुणयेति वाक्यं भित्त्वा प्रकरणविहितसर्वद्रव्यपर्यन्तमेवारुणिमानमविशेषेणाभिदधाति। अरुणयेति स्त्रीलिङ्गनिर्देशः प्रकरणविहितसर्वलिङ्गद्रव्याणां प्रदर्शनार्थः। तस्मादेकहायन्यन्वयनियमोऽरुणिम्नो न स्यादिति॥

अत्राभिधीयते। अर्थैकत्वे द्रव्यगुणयोरैककर्म्यात्‡नियमः स्यात्। अरुणयैकहायन्येत्यारुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयोः सामानाधिकरण्येनार्थैकत्वे सिद्धे सति एकहायनीद्रव्यारुण्यगुणयोररुणयेति¶ पदेनैव विशेषणविशेष्यभावेन सम्बन्धितयाभिहितयोः क्रयाख्यैककर्मान्वयविरोधादरुणिम्नः क्रयसाधनभूतैकहायन्यन्वयनियमः स्यात्। यद्येकहायन्या क्रय§सम्बन्धवदरुणिमसम्बन्धोऽपि वाक्यावसेयः स्यात्, तदा वाक्यस्यार्थद्वयविधानं स्यात्। नचैतदस्ति। अरुणयेति पदेनैवारुणिमविशिष्टद्रव्यमभिहितम्। एकहायनीपदसामानाधिकरण्येन तस्यैकहायनीत्वमात्रमवगम्यते, न गुणसम्बन्धः। विशिष्ट‖द्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थः। भिन्नप्रवृत्तिनिमित्तानां शब्दाना-

---

* एकहायनत्वमिति ख०। अयुक्तमेतत्।

† सोमं क्रीणातीति ख०।

‡ ऐक्यकर्म्यादिति ख०, ग०।

¶ अरुणयेतिवद्नेनैवेति ग०।

§ व्याश्रयेति ग०। अशुद्धमेतत्।

‖ अतो गुणसम्बन्धविशिष्टेति ख०।

मेकार्थे वृत्तिः सामानाधिकरण्यमिति हि तल्लक्षणम्। अत एव हि * रक्तः पटो भवतीत्यादिष्वैकार्थ्यादेकवाक्यत्वम्। पटस्य भवनक्रियासम्बन्धे हि वाक्यव्यापारः†। रागसम्बन्धस्तु रक्तपदेणैवाभिहितः। रागसम्बन्धि द्रव्यं पट इत्येतावन्मात्रं सामानाधिकरण्येनावसेयम्। एवमेकेन गुणेन द्वाभ्यां बहुभिर्वा तेन तेन पदेन समस्तेन व्यस्तेन वा ‡ विशिष्टत्वमुपस्थाप्य सामानाधिकरण्येन सर्वविशेषणविशिष्टार्थ एक इति ज्ञापयित्वा तस्य क्रियासम्बन्धाभिधानमविरुद्धम् ¶। देवदत्तः श्यामो युवा लोहिताक्षो दण्डी कुण्डली तिष्ठति, शुक्लेन वाससा यवनिकां सम्पादयेत् §, नीलमुत्पलमानय, गामानय शुक्लां शोभनाक्षीम्, अग्नये पथि कृते पुरोडाशमष्टाकपालं निर्वपेत्। एवमरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीति। एतदुक्तं भवति। यथा काष्ठैः स्थाल्यामोदनं पचेदित्यनेककारकविशिष्टैका क्रिया युगपत् प्रतीयते। तथा समानाधिकरणे पदसङ्घाताभिहितमेकैकं कारकं तत्तत्कारकप्रतिपत्तिवेलायामेवानेकविशेषणविशिष्टं युगपत्प्रतिपन्नं क्रियायामन्वेतीति न कश्चिद्विरोधः, खादिरैः शुष्कैः काष्ठैः समपरिमाणे भाण्डे पायसं शाल्योदनं समर्थः पाचकः पचेदित्यादिष्विति॥

---

* अत एव रक्त इति ख०।

† सम्बन्धी हि वाक्यस्यार्थ इति ख०।

‡ व्यस्तेनेति न पठति ख-पुस्तकम्।

¶ सम्बन्ध्यभिन्नमविरुद्धमिति ख०। अशुद्धमेतत्।

§ आपादयेदिति ख०।

यत्तूक्तम्, उपात्तद्रव्यक*वाक्यस्थगुणशब्दः केवलगुणाभिधायीत्यरुणयेति पदेन केवलगुणस्यैवाभिधानमिति। तन्नोपपद्यते। लोकवेदयोर्द्रव्यवाचिपदसमानाधिकरणस्य गुणवाचिनः क्वचिदपि केवलगुणाभिधानादर्शनादुपात्तद्रव्यकवाक्यस्थं गुणपदं केवलगुणाभिधायीत्यसङ्गतम्†। पटः शुक्ल इत्यादिषूपात्तद्रव्यकेऽपि गुणविशिष्टस्यैवाभिधानात्‡। पटस्य शुक्ल इत्यत्र शौक्लविशिष्टपटा¶प्रतिपत्तिरसमानविभक्तिनिर्देशकृता, न पुनरुपात्तद्रव्यकत्वकृता। तत्रैव पटस्य शुक्लो भाग इत्यादिषु समानविभक्तिनिर्देशे शौक्लयादि§विशिष्टद्रव्यं प्रतीयते॥

यत्पुनः, क्रयस्यैकहायन्या‖विरुद्धतयारुणिम्नः क्रिया**न्वयो न सम्भवतीति। तदपि विरोधिगुणरहितद्रव्यवाचिपदसमानाधिकरणगुणपदस्य तदाश्रयगुणाभिधानेन क्रियापदान्वयाविरोधादसङ्गतम्। राद्धान्ते चोक्तन्यायेनारुणिम्नः शाब्दे††द्रव्यान्वये सिद्धे द्रव्यगुणयोः क्रयसाधनत्वानुपपत्त्यार्थात् परस्परान्वयः सिध्यतीत्यप्यसङ्गतम्। अतो यथोक्त एवार्थः। तस्मात् तत्त्वमस्यादिसामानाधिकरण्ये पदद्वयाभिहितविशेषणापरित्यागे-

---

* द्रव्यवाक्यस्थेति ख०। द्रव्यैकवाक्यस्थेति ग०।

† अभिधायीत्यसङ्गतमिति ख०। लिपिकरप्रमादविजृम्भणमिदम्।

‡ उपात्तद्रव्यैकवाक्यस्थं गुणपदं केवलगुणाभिधायीत्यस्यैवाभिधानादिति ग०।

¶ पटाप्रतीतिरिति ग०।

§ शौक्लविशिष्टमिति ग०।

§ हायन्यविरुद्धतयेति ख०, ग०।

** क्रयान्वय इति ख०, ग०।

†† शब्द इति ख०। नैतत् समीचीनम्।

नैवैक्यप्रतिपादनं वर्णनीयम् । तत्त्वनाद्यविद्योपहितानवधिक-
दुःखभागिनः शुद्धाशुद्धाभयावस्थाच्चेतनादर्थान्तर*भूतमशेषहेय-
प्रत्यनीकानवधिककल्याण†गुणैकतानं परमात्मानमनभ्युपगच्छतो
न सम्भवति । अभ्युपगच्छतोऽपि समानाधिकरणपदानां यथा-
वस्थितविशेषणविशिष्टैक्यप्रतिपादनपरत्वाश्रयणे‡ त्वं-पदप्रतिपन्न-
सकलदोषभागित्वं परस्य प्रसज्येत इति चेत् । नैतदेवम् । त्वं-
पदेनापि जीवान्तर्यामिणः परस्यैवाभिधानात् । एतदुक्तं भवति ।
सच्छब्दाभिहितं निरस्तनिखिलदोषगन्धसत्यसंकल्पमिश्रानवधि-
कातिशय¶कल्याणगुणं समस्तकारणभूतं ब्रह्म, बहु स्यामिति
संकल्प्य तेजोऽवन्नप्रमुखं कृत्स्नं जगत् सृष्ट्वा तस्मिन् देवादि-
विचित्रसंस्थानसंस्थिते जगति चेतनं जीववर्गं स्वकर्मानुगुणेषु
शरीरेष्वात्मतया प्रवेश्य§ स्वयञ्च स्वेच्छयैव जीवान्तरात्मतयानु-
प्रविश्य एवम्भूतेषु स्वपर्यन्तेषु देवाद्याकारेषु सङ्घातेषु || नाम-
रूपे व्याकरोत् । एवंरूपसङ्घातस्यैव वस्तुत्वं शब्दवाच्यत्वञ्चाकरो-
दित्यर्थः । अनेन जीवेनात्मना जीवेन मये**ति निर्देशो

---

* चेतनानर्थान्तरेति ख० । पाठोऽयमनर्थमेव जनयति । चेतनाचेतनादर्था-
न्तरेति ग० ।

† प्रत्यनीककल्याणेति ख० ।

‡ परत्वाश्रयणादिति ग० ।

¶ दोषगन्धं सत्यसंकल्पं नित्यानवधिकातिशयेति ख० ।—दोषं सत्यसंकल्पमिश्रा-
नन्तेति ग० ।

¶ अनुप्रवेश्येति ग० ।

|| सङ्घातेष्विति न पठ्यते ग-पुस्तके ।

** जीवेन मयेति नोपलभ्यते ग-पुस्तके ।

जीवस्य ब्रह्मात्मकत्वं प्रदर्शयति। ब्रह्मात्मकत्वञ्च जीवस्य जीवान्तरात्मतया ब्रह्मणोऽनुप्रवेशादित्यवगम्यते। इदं सर्वमसृजत् यदिदं किञ्च, तत् सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाभवदित्यत्र इदं सर्वमिति निर्दिष्टं चेतनाचेतनं वस्तुद्वयं सत्त्यच्छब्दाभ्यां विज्ञानाविज्ञानशब्दाभ्याञ्च विभज्य निर्दिश्य चिद्वस्तुन्यपि ब्रह्मणोऽनुप्रवेशाभिधानात्। अत एवं*नामरूपव्याकरणात् सर्वे वाचकाः शब्दा अचिज्जीवविशिष्टपरमात्मवाचिन †इत्यवगतमिति। किञ्च, ऐतदात्म्यमिदं सर्वमिति चेतनमिश्रं प्रपञ्चमिदं सर्वमिति निर्दिश्य तस्यैष‡ आत्मेति प्रतिपादितम्। एवञ्च सर्वचेतनाचेतनं ¶ प्रति ब्रह्मण आत्मत्वे सर्वं सचेतनं § जगदस्य शरीरञ्च भवति। तथा च श्रुत्यन्तराणि। अन्तःप्रविष्टः शास्ता जनानां, सर्वात्मा, यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो, यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति, स त आत्मान्तर्याम्यमृत इति प्रारभ्य, य आत्मनि तिष्ठन्नात्मनोऽन्तरो, यमात्मा न वेद, यस्यात्मा शरीरं, य आत्मानमन्तरो यमयति, स त आत्मान्तर्याम्यमृत इत्यादि, यः पृथिवीमन्तरे सञ्चरन्, यस्य पृथिवी शरीरं, योऽपामन्तरे सञ्चरन्, यस्यापः शरीरमित्यारभ्य, योऽक्षरमन्तरे सञ्चरन्, यस्याक्षरं शरीरं, यम-

* अत एवेति ग०।

† वाचका इति ग०।

‡ तस्यैव आत्मेति ख०। एष आत्मेति ग०।

¶ सर्वं चेतनाचेतनमिति ख०। चेतनाचेतनमिति ग०।

§ प्रति ब्रह्मण आत्मत्वे सर्वं सचेतनमिति पाठः ख-पुस्तके पतित इवाभाति।

क्षरं न वेद, एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायण इत्यादीनि सचेतनं जगत् तस्य शरीरत्वेन निर्दिश्य तस्यात्मत्वेन परमात्मानमुपदिशन्ति । अतश्चेतनाचेतन*वाचिनोऽपि शब्दाश्चेतनस्याप्यात्मभूतं चेतनशरीरकं परमात्मानमेवाभिदधति । यथा अचेतनदेवादिसंस्थानपिण्डवाचिनः शब्दाः तत्तच्छरीर†कजीवात्मन एव वाचकाः, चत्वारः पञ्चदशरात्रा देवत्वं गच्छन्तीत्यादिषु देवा भवन्तीत्यर्थः । शरीरस्य शरीरिणं प्रति प्रकारत्वात् प्रकारवाचिनां शब्दानां प्रकारिण्येव पर्यवसानात् शरीराभिधायिनां शब्दानां शरीरि‡पर्यवसानं न्याय्यम् । प्रकारो हि नाम इदमित्थ¶मिति प्रतीयमाने वस्तुनीत्थमिति प्रतीयमानोंऽशः । तस्य तद्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात् तस्मिन्नेव पर्यवसानं युक्तमिति तस्य प्रतिपादकोऽपि शब्दः तस्मिन्नेव पर्यवस्यति । अत एव गौरश्वो मनुष्य इत्यादिप्रकारभूताकृतिवाचिनः शब्दाः प्रकारिणि पिण्डे पर्यवस्यन्तः पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात् पिण्डशरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्यवस्यन्तीति § सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचकशब्देन सामानाधिकरण्यं मुख्यवृत्तमेव ॥

---

* चेतनवाचिन इति ग० ।

† तच्छरीरकेति ख०, ग० ।

‡ शरीरेति क० ।

¶ इदमिति ख०, ग० ।

§ अत एवेति पठति ख-पुस्तकम् ।

ननु षण्डो गौः षण्डः शुक्ल इति जातिगुणवाचिनामेव पदानां द्रव्यवाचिपदैः सह सामानाधिकरण्यं दृष्टम्। द्रव्याणान्तु द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टः, यथा दण्डी कुण्डलीति। नैवम्। जातिर्वा गुणो वा द्रव्यं वा नेत्येकमेव सामानाधिकरण्य*प्रयोजकम्, अन्योन्यस्मिन् व्यभिचारात्। यस्य कस्यचित् प्रकारतयैव सद्भावस्तस्य तदपृथक्सिद्धिस्थिति-† प्रतिपत्तिभि‡स्तद्वाचकानां शब्दानां स्वाभिधेयविशिष्टद्रव्यवाचित्वात् धर्मान्तरविशिष्टतद्द्रव्यवाचिना शब्देन सामानाधिकरण्यं युक्तमेव। यत्र पुनः पृथक्सिद्धस्य¶ स्वनिष्ठस्यैव द्रव्यस्य कस्यचित्§ कदाचित् द्रव्यान्तरप्रकारत्वमवगम्यते, तत्र मत्वर्थीय इति निरवद्यम्॥

तदेवं परमात्मनः शरीरतया तत्प्रकारत्वादचिद्विशिष्टस्य‖ जीवस्याचिद्विशिष्टजीवविशेषनिर्देश**रूपा अहं—त्वमित्यादिशब्दाः परमात्मान††माचक्षत इति तत्त्वमसीति सामानाधिकरण्येनोपसंहृतम्। एवञ्च सति परमात्मानं प्रति जीवस्य शरीरतया हेया जीवगता धर्माः परमात्मानं न स्पृशन्ति। यथा

---

* सामानाधिकरण्ये इति ग०।

† स्थितीत्यत्र स्मृतीति पठति ख-पुस्तकम्।

‡ प्रतीतिभिरिति ग०।

¶ सिद्धार्हस्येति ख०।

§ कस्यचिदिति नोपलभ्यते ख ग-पुस्तकयोः।

‖ अचिद्विशिष्टजीवस्येति ख०। अचिन्मात्रविशिष्टस्येति ग०।

** निर्देशविशेषरूपेति ख०।

†† एवाचक्षते इति ख०, ग०।

स्वशरीरगता बालत्वयुवत्वादयो धर्मा जीवं न स्पृशन्ति । अत-स्तत्त्वमसीति सामानाधिकरण्ये तत्-पदं जगत्कारणभूतं सत्य-संकल्पं सर्वकल्याणगुणाकरं निरस्तसमस्तहेय*गन्धं परमात्मा-नमाचष्टे । त्व-मिति च तमेव सशरीरकजीवशरीरकमाचष्ट इति सामानाधिकरण्यं मुख्यवृत्तम् । प्रकरणाविरोधः सर्वश्रुत्यविरोधो ब्रह्मणि निरवद्ये कल्याणैकताने ऽविद्यादिदोषगन्धाभावश्च । अतो जीवसामानाधिकरण्यमपि विशेषणभूताज्जीवा†दन्यत्वमेवोप-पादयतीति विज्ञानमयाज्जीवादन्य एवानन्दमयः परमात्मा ॥

यदुक्तं, तस्यैष एव शारीर आत्मेत्यानन्दमयस्य शारीरत्व-श्रवणा‡ज्जीवादन्यत्वं न सम्भवतीति । तदयुक्तम् । तस्मिन् प्रकरणे सर्वत्र, तस्यैष एव शारीर आत्मा यः पूर्वस्येति परमात्मन एव शारीरात्मत्वाभिधानात् कथं, तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्याकाशादिसृज्यवर्गस्य परमकारणत्वेन प्रतिज्ञातजीव-व्यतिरेकस्यैकस्य ब्रह्मण आत्मत्वेन व्यपदेशात् तद्व्यतिरिक्ताकाशा-दीनामन्नमयपर्यन्तानां तच्छरीरत्वमवगम्यते । यस्य पृथिवी शरीरं, यस्यापः शरीरं, यस्य तेजः शरीरं, यस्य वायुः शरीरं, यस्याकाशः शरीरं, यस्याक्षरं शरीरं, यस्य मृत्युः शरीरम्, एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायण इति

---

* निरस्तहेयेति ख० ।

† विशेषणभूतजीवादिति ख० ।

‡ अन्य एव—इत्यादिः शारीरत्वश्रवणादित्यन्तः पाठः ख-ग-पुस्तकयोर्न पठ्यते । लिपिकरप्रमाद एवात्र बीजम् ।

सुबाल*श्रुत्या सर्वतत्त्वानां परमात्मशरीरत्वं स्पष्टमभिधीयते। अतः, तस्माद्वा एतस्मादात्मन इत्यन्नैवान्नमयस्य परमात्मैव शारीर आत्मेत्यवगतम्। प्राणमयं प्रस्तुत्याह, तस्यैष एव शारीर आत्मा यः पूर्वस्येति। पूर्वस्यान्नमयस्य य शारीर आत्मा श्रुत्यन्तरसिद्धः† परमकारणभूतः परमात्मा, स एव‡ तस्य प्राणमयस्यापि शारीर आत्मेत्यर्थः। एवं मनोमयविज्ञानमययोर्द्रष्टव्यम्। आनन्दमये त्वेष एवेति निर्देशः¶ तस्यानन्यात्मकत्वं दर्शयितुम्। तत्कथं विज्ञानमयस्यापि§ पूर्वोक्तया नीत्या परमात्मैव शारीर आत्मेत्यवगमः‖। एवं सति विज्ञानमयस्य यः शारीर आत्मा स एवानन्दमयस्यापि शारीर आत्मेत्युक्ते** आनन्दमयस्याभ्यासावगतपरमात्म††भावस्य परमात्मनः स्वयमेवात्मेत्यवगम्यते। एवञ्च स्वव्यतिरिक्तं चेतनाचेतनवस्तुजातं स्वशरीरमिति स एव निरुपाधिकः शारीर आत्मा। अत एवेदं परं ब्रह्माधिकृत्य प्रवृत्तं

---

* सकलेति ख०। सबलेनि ग०। उभयत्राप्युपलभ्यमानौ पाठौ प्रमादपरिकल्पितौ।

† शारीर आत्मेत्यादिः श्रुत्यन्तरसिद्ध इत्यन्तः सन्दर्भः ख-पुस्तके लिपिकरप्रमादात् पतित इत्यवगन्तव्यम्।

‡ एवैतस्येति ख०।

¶ निर्देशादिति ख०। असमीचीनमेतत्।

§ तज्ज्ञानमयस्यापीति ख०। अयुक्तमेतत्।

‖ अवगत इति ख०, ग०। नैतत् समीचीनतया प्रतिभाति।

** उक्तमिति ख०। अयोग्यमिदम्।

†† परमात्ममतस्य भावस्येति ग०। अयुक्तमेतत्।

शास्त्रं शारीरकमित्यभियुक्तै-*रभिधीयते । अतो विज्ञानमया-ज्जीवादन्य एव परमात्मानन्दमयः ॥

ननु, नायमानन्दमयो जीवादन्यः, विकारशब्दस्य मयट्-प्रत्ययस्य श्रवणात् † । मयड्वैतयोरिति प्रकृत्य, नित्यं वृद्ध-शरादिभ्य इति विकारार्थे मयट् स्मर्यते । वृद्धश्चायमानन्द-शब्दः । ननु प्राचुर्येऽपि मयडस्ति । तत्प्रकृतवचने मयडिति स्मृतेः । यथान्नमयो यज्ञ इति । स एवायं भविष्यति । नैवम्‡ । अन्नमय इत्युपक्रमे विकारार्थत्वं दृष्टम् । अत औचित्यादस्यापि विकारार्थत्वमेव युक्तम् । किञ्च¶, प्राचुर्यार्थत्वेऽपि तदन्यत्वं§ न सिध्यति । तदा ह्यानन्दप्रचुर इत्युक्ते दुःखमिश्रत्वमवर्जनीयम् । आनन्दस्य हि प्राचुर्यं दुःखस्याल्पत्वमवगमयति । दुःखमिश्रत्व-मेव हि जीवत्वम् । अत औचित्यप्राप्तविकारार्थत्वमेव युक्तम् । किञ्च, लोके मृण्मयं हिरण्मयं दारुमयमित्यादिषु, वेदे च पर्ण-मयी जुहूः शमीमय्यः स्रुचो दर्भमयी रशनेत्यादिषु मयटो विकारार्थे प्रयोगबाहुल्यात् स एव प्रथमतरां धियमधिरोहति । जीवस्य चानन्दविकारत्वमस्त्येव । तस्य स्वत आनन्दरूपस्य सतः|| संसारित्वावस्था तद्विकार एवेति । अतो विकार**वाचिनो

* उपयुक्तैरिति ग० ।

† मयट्प्रत्ययस्य श्रवणादिति पतितं ख-पुस्तके ।

‡ नैवमिति ग० ।

¶ किञ्चेति न दृश्यते ग-पुस्तके ।

§ जीवान्यत्वमिति ख० ।

|| स्वत इति ख० । अशुद्धमेतत् ।

** विकारमयत्ववाचिन इति ग० ।

मयट्प्रत्ययस्य श्रवणादानन्दमयो जीवादनतिरिक्त इति तदे-
तदनुभाष्य परिहरति।

## विकारशब्दान्नेति चेन्न प्राचुर्यात्॥ १४॥

(क) 'नैतद्युक्तम्। कुतः। 'प्राचुर्यात्'। परस्मिन् ब्रह्मण्या-
नन्दप्राचुर्यार्थेऽपि * मयट्सम्भवात्। एतदुक्तं भवति। शत-
गुणितोत्तरक्रमेणाभ्यस्यमानस्यानन्दस्य जीवाश्रयत्वासम्भवात्
ब्रह्माश्रयोऽयमानन्द इति निश्चिते सति तस्मिन् ब्रह्मणि विकारा-
सम्भवात् प्राचुर्येऽपि मयट्सद्भावाच्च आनन्दमयः परं ब्रह्मेति
औचित्यात् प्रयोगप्रौढ्या † च मयटो विकारार्थत्वमर्थविरोधान्न
सम्भवति। किञ्च, औचित्यं प्राणमय एव परित्यक्तं, तत्र विका-
रार्थत्वासम्भवात्। अतस्तत्र पञ्चवृत्तेर्वायोः प्राणवृत्तिमात्रेण
प्राणमयत्वम्। प्राणापानादिषु पञ्चवृत्तिषु प्राणवृत्तेः प्रचुर-

---

(क) ननु 'नायमानन्दमयः परमात्मा। कस्मात्। 'विकारशब्दात्'।
विकारवाची शब्दो मयट्प्रत्ययो यस्मिन्, तस्मात्। स वा एष पुरुषोऽन्न-
रसमय इति विकारार्थमयटः श्रवणादानन्दमय इत्यस्यापि विकारार्थत्वं
युक्तम्। 'इति चेत्'। तत्राह। 'न'। कुतः। प्राचुर्यात्। प्रत्यगात्म-
न्यपि, न जायते म्रियते वा विपश्चिदिति विकारप्रतिषेधात् प्राचुर्यार्थे
एवायं मयडिति निश्चीयते। आनन्दप्रचुरत्वञ्च, स एको मानुष आनन्द
इत्यादिना मनुष्यानन्दमारभ्य उत्तरोत्तरशतगुणितानन्दमुक्त्वा ब्रह्मानन्दस्य
निरतिशयापरिमितत्वाभिधानात्। अतः परमपुरुष एव आनन्दमयः॥१४॥

---

* आनन्दप्राचुर्यात् प्राचुर्यार्थे इति ख०, ग०।

† प्रौढ्याचेति ख०, ग०।

त्वाद्वा। नच प्राचुर्ये मयट्प्रत्ययस्य प्रौढ़िर्नास्ति। अन्नमयो यज्ञः शरमयी सेना * शकटमयी यात्रेत्यादिदर्शनात्॥

यदुक्तम्, आनन्दप्राचुर्यमल्पदुःखसद्भावमवगमयतीति। तदसत्। तत्प्रचुरत्वं हि तत्प्रभूतत्वमेव। तच्चेतरस्य सत्तां नावगमयति। अपि तु तस्याल्पत्वं निवर्तयति। इतरसद्भावासद्भावौ तु † प्रमाणान्तरावसेयौ। इह च प्रमाणान्तरेण तदभावोऽवगम्यते, अपहतपाप्मेत्यादिना। तच्चैतावदेव वक्तव्यम्। ब्रह्मानन्दस्य प्रभूतत्वमन्यानन्दस्याल्पत्वमपेक्ष्य ‡ इत्युच्यते। तत्, स एको मानुष आनन्द इत्यादिना जीवानन्दापेक्षया ब्रह्मानन्दो निरतिशयदशापन्नः ¶ प्रभूत इति॥

यच्चोक्तं, जीवस्यानन्दविकारत्वं सम्भवतीति। तदपि नोपपद्यते। जीवस्य ज्ञानानन्दैकगुणस्वरूपस्य केनचिदाकारेण मृद इव घटाद्या§कारेण परिणामः सकलश्रुतिस्मृतिन्यायविरुद्धः। संसारदशायान्तु तत्कर्मणा || ज्ञानानन्दौ सङ्कुचितावित्युपपादयिष्यते। अतश्चानन्दमयो जीवादन्यः परं ब्रह्म॥

इतश्च जीवादन्य आनन्दमयः **।

* शरमयी सेनेति नोपलभ्यते ख-गपुस्तकयोः।

† त्विति न दृश्यते ख-पुस्तके। सदसद्भावौ त्विति ग०।

‡ अल्पत्वापेक्षमिति ग०।

¶ सम्पन्न इति ख०।

§ घटाकारेणेति ग०।

|| तत्कर्मणेति नोपलभ्यते ग-पुस्तके।

** इतश्चेत्यादिः पाठः ग-पुस्तके पतित इति मा विस्मर्तव्यम्।

## तद्धेतुव्यपदेशाच्च ॥ १५ ॥

(क) को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयातीति। एष एव जीवानानन्दयतीति जीवानामानन्दहेतुरयं व्यपदिश्यते। अतश्चानन्दयितव्याज्जीवादानन्दयितायमन्य आनन्दमयः परमात्मे*ति विज्ञायते। आनन्दमय एवात्रानन्दशब्देनोच्यत इति चानन्तरमेव †वक्ष्यते॥

इतश्च जीवादन्य आनन्दमयः।

## मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥

(ख) सत्यं ज्ञानमनन्तं ब्रह्मेति 'मन्त्रवर्णोदितं ब्रह्मैवानन्दमय इति 'गीयते'। तच्च‡ जीवस्वरूपादन्यत् परं ब्रह्म। तथा हि, ब्रह्मविदाप्नोति परमिति जीवस्य प्राप्यतया ब्रह्म निर्दिष्टम्।

---

(क) तच्च, तस्य हेतुत्वेन व्यपदेशः, तस्मात्। एष ह्येवानन्दयातीति श्रुतेः तस्य जीवानन्दस्य हेतुरयमेवेति व्यपदिश्यते। यो हि अन्यानानन्दयति, स खलु प्रचुरानन्दः। यथा लोके योऽन्येभ्यो धनं ददाति, स प्रचुरधनशालीति। तस्मादानन्दयितृत्वव्यपदेशाच्च आनन्दमयशब्दवाच्यः परमात्मैव। 'च'कारः पूर्वसूत्रार्थसमुच्चयार्थः॥ १५॥

(ख) तत्र हेतुमाह। मन्त्रवर्णेन उक्तं यत् तत् 'मान्त्रवर्णिकं' ब्रह्मैव आनन्दमय इति 'गीयते'। तथा हि; ब्रह्मविदाप्नोति परमिति ब्राह्मणेन यद्ब्रह्म जीवप्राप्यतया उपक्रान्तं, सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रेण च सत्यत्वादिविशिष्टं यन्निश्चितं, तदेव इह, अन्योऽन्तर आत्मा आनन्दमय

---

* स परमात्मेति ग०।

† उच्यत इति ख०। आचक्ष्यत इति ग०।

‡ तदिति ख०।

तदेषा*भ्युक्तेति तद्ब्रह्माभिमुखीकृत्य प्रतिपाद्यतया च परिगृह्य श्लोकेषा अध्येतृभिरुक्ता, ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रेण क्रियत इत्यर्थः। जीवस्योपासकस्य प्राप्यं ब्रह्म तस्माद्विलक्षणमेव। अनन्तरञ्च, तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यारभ्य उत्तरोत्तरैर्ब्राह्मणैर्मन्त्रैश्च तदेव विशदीक्रियते। अतो जीवादन्य आनन्दमयः॥

अत्राह—यद्यप्युपासकात् प्राप्यस्य भेदेन भवितव्यं, तथापि न वस्त्वन्तरं जीवान्मान्त्रवर्णिकं ब्रह्म। किन्तु तस्यैवोपासकस्य निरस्ता†विद्यागन्धं निर्विशेषचिन्मात्रैकरसं शुद्ध‡स्वरूपं तदेव, सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रेण विशोध्यते। तदेव च, यतो वाचो निवर्त्तन्तेऽप्राप्य मनसा सहेति वाङ्मनसागोचरतया निर्विशेषमिति गम्यते। अतस्तदेव मान्त्रवर्णिकमिति, तस्मादनतिरिक्त आनन्दमय इत्यत उत्तरं पठति।

## नेतरोऽनुपपत्तेः॥ १७॥

(क) परमात्मन 'इतरो' जीवशब्दाभिलप्यो¶ मुक्तावस्थोऽपि 'न' भवति मान्त्रवर्णिकः। कुतः। 'अनुपपत्तेः'।

---

इत्युच्यते। मन्त्रब्राह्मणयोरेकविषयत्वात्। अतश्च, न प्रत्यगात्मा आनन्दमयः॥ १६॥

(क) अपि च। 'इतरो' ब्रह्मणो भिन्नो जीवो मन्त्रवर्णोदित इति 'न'

---

* तदेवेति ग०। अयोग्यमेतत्।

† निरस्तसमस्तेति ग०।

‡ शुद्धं स्वरूपमिति क०, ख०।

¶ शब्दाभिधेय इति ख०।

तथाविधस्यात्मनो निरुपाधिक*विपश्चित्त्वं नोपपद्यते। इद-मेव हि निरुपाधिकं विपश्चित्वं, सोऽकामयत बहु स्यां प्रजाये-येति सत्यसङ्कल्पत्वप्रदर्शनेन व्यपदिश्यते†। विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम्। पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः। यद्यपि मुक्तस्य विपश्चित्त्वं सम्भवति। तथापि तस्यैवात्मनः संसार‡दशायामविपश्चित्त्व-मप्यस्तीति निरुपाधिकं विपश्चित्त्वं नोपपद्यते। निर्विशेषचिन्मात्र-तापन्नस्य मुक्तस्य विविधदर्शना¶सम्भवात् सुतरां विपश्चित्त्वं न सम्भवतीति न केनापि प्रमाणेन निर्विशेषं वस्तु प्रतिपाद्यत इति च पूर्वमेवोक्तम्। यतो वाचो निवर्तन्त इति च वाक्यं

---

आशङ्कनीयम्। कुतः। 'अनुपपत्तेः'। सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति तस्य बद्धस्य मुक्तावस्थस्यापि चेटृशविपश्चित्त्वानुपपत्तेः। विविधं पश्यच्चित्त्वं हि विपश्चित्त्वं, पृषोदरादित्वात् सिद्धम्। तच्च, सोऽका-मयत बहु स्यां प्रजायेयेति विचित्रस्थिरचरचसरूपनिरुपाधिकबहुभवन-संकल्पपूर्वकं सर्वज्ञत्वम्। एतत्तु जीवात्मनः परिशुद्धस्यापि न सम्भवति। 'जगद्व्यापारवर्जं प्रकरणादिति' वक्ष्यमाणत्वात्। अतो विद्वत्प्राप्यत्वनिरु-पाधिकविपश्चित्त्वजगत्कारणत्वाद्यसाधारणगुणानां जीवात्मन्यनुपपत्तेः परं ब्रह्मैव मान्त्रवर्णिकम्॥ १७॥

---

* निरुपाधिकमिति ग०।

† विविच्यत इति ग०।

‡ संसारित्वदशायामिति ख०, ग०।

¶ दर्शनाभावा इति ख०।

यदि वाङ्मनसयोर्ब्रह्मणो निवृत्तिमभिदधीत*, ततो निर्विशेषतां वस्तुनोऽवगमयितुं शक्नुयात्। अपि तु वाङ्मनसयोस्तत्राप्रमाणतां वदेत्। तथा च सति तस्य तुच्छत्वमेवापद्यते †। ब्रह्मविदाप्नोति परमित्यारभ्य ब्रह्मणो विपश्चित्त्वं जगत्कारणत्वमानन्दैकतानत्वमितरान् प्रत्यानन्दयितृत्वं कामादेव चिदचिदात्मकस्य कृत्स्नस्य स्रष्टृत्वं सृज्यवर्गानुप्रवेशकृत‡तदात्मकत्वं भयाभयहेतुत्वं वायादित्यादीनां प्रशासितृत्वं शतगुणितोत्तरक्रमेण निरतिशयानन्दत्वमन्यच्चानेकं प्रतिपाद्य वाङ्मनसयोर्ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकं ब्रह्मेत्युच्यत इति भ्रान्त¶जल्पितम्। यतो वाचो निवर्तन्त इति यच्छब्दनिर्दिष्टमर्थम्, आनन्दं ब्रह्मणो विद्वानित्यानन्दशब्देन प्रतिनिर्दिश्य तस्य ब्रह्मसम्बन्धित्वं ब्रह्मण इति व्यतिरेकनिर्देशेन प्रतिपाद्य तदेव वाङ्मनसागोचरं विद्वानिति तद्वेदनमभिदधद्वाक्यं जरद्गवादिवाक्यवदनर्थकं वाच्या§नन्तर्गतञ्च स्यात्। अतः शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्यातिशयितां‖ वक्तुमुद्यम्य तस्य इयत्ता**भावादेव वाङ्मनसयोस्ततो ††निवृत्तिः, यतो वाचो निवर्तन्त इत्युच्यते। एव-

---

* अभिधत्त इति ग० ।

† तत इत्यारभ्य आपद्यत इत्यन्तः सन्दर्भः ख-पुस्तके पतित इत्यवगन्तव्यम् ।

‡ प्रवेशात् तदात्मकत्वमिति ख० ।

¶ भ्रान्तीति ख० ।

§ वाक्येति ख० । न समीचीनमेतत् ।

‖ अतिशयतामिति ख० । अतिशयेन इयत्तामिति ग० ।

** इयत्तास्वभावेनेति ख० । अशुद्धमेतत् । इयत्ताया अभावादिति ग० ।

†† निवृत्तेरिति ख० ।

मियत्तारहितं ब्रह्मण आनन्दं * विद्वान् कुतश्चन न बिभेतीत्युच्यते। किञ्चास्य मान्त्रवर्णिकस्य विपश्चितः, सोऽकामयतेत्यारभ्य वक्ष्यमाणस्वसंकल्पावक्लृप्तजगज्जन्मस्थितिजगदन्तरात्मत्वादेर्मुक्तात्मस्वरूपादन्यत्वं सुस्पष्टमेव॥

इतश्चो†भयावस्थात् प्रत्यगात्मनोऽन्य आनन्दमयः।

## भेदव्यपदेशाच्च॥ १८॥

(क) तस्माद्वा एतस्मादात्मन इत्यारभ्य मान्त्रवर्णिकं ब्रह्म व्यञ्जयद्वाक्यमन्नप्राणमनोभ्य इव जीवादपि तस्य भेदं व्यपदिशति, तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा ‡ आनन्दमय इति। अतो जीवात् 'भेदव्यपदेशाच्च' अयं मान्त्रवर्णिक आनन्दमयोऽन्य एवेति विज्ञायते॥

इतश्च ¶ जीवादन्यः।

---

(क) इतोऽपि विज्ञानात्मा नानन्दमयः। यतो 'भेदेन व्यपदिश्यते। भीषास्माद्वातः पवते, विज्ञानमयादन्योऽन्तर आत्मा, आनन्दं ब्रह्मणो विद्वानित्यादिभिरनिलानलादिजीववर्गस्य प्रशासितृत्वादिना स्वाभाविकजीवेश्वरभेदस्य 'व्यपदेशाच्च'। अपि च, विज्ञानं यज्ञं तनुत इति व्यपदेशाद्विज्ञानमयो जीव एव, न बुद्धिमात्रं बुद्धेः करणत्वादिति मा विस्मर्तव्यम्। नच, नान्योऽतोऽस्ति द्रष्टेत्यादिवाक्येन न परमेश्वरादन्यः कश्चित्

---

* आनन्दं ब्रह्मण इति ग०।

† अतश्चेति ख०।

‡ अन्तरात्मेति ख०।

¶ अतश्चेति ख०।

## कामाच्च नानुमानापेक्षा ॥ १९ ॥

(क) जीवस्याविद्यापरवशस्य जगत्कारणत्वे ह्य*वर्जनीयानुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुसंसर्गापेक्षा च† । तथैव हि चतुर्मुखादीनां कारणत्वम् । इह च, सोऽकामयत बहु स्यां प्रजायेयेत्यचित्संसर्गरहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुनः सृष्टिः, इदं सर्वमसृजत, यदिदं किञ्चेत्याम्नायते । अतोऽस्यानन्दमयस्य जगत् सृजतो नानुमानिकाचिद्वस्तुसंसर्गापेक्षा प्रतीयते । अतश्च जीवादन्य आनन्दमयः ॥

इतश्च ।

## अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥

(ख) 'अस्मिन्' आनन्दमये 'अस्य' च जीवस्य 'तद्योगमानन्दयोगं 'शास्ति' शास्त्रम् । रसो वै सः रसꣳ ह्येवायं लब्ध्वानन्दी

---

प्रत्यागात्मेत्याशङ्कनीयम् । एतद्वाक्यस्य तु प्रत्यगात्मस्वातन्त्र्यशङ्कृत्वभोक्तृत्वादिनिषेधपरत्वात् । अतश्च आनन्दमय परमात्मेति ॥ १८ ॥

(क) इतश्च । जीवस्य हि यस्य कस्यचिदपि निर्माणकर्मणि अविद्यापरवशतया 'अनुमानस्य प्रधानस्य कारणादिरूपाचिद्वस्तुनोऽपेक्षा' दृश्यते । आनन्दमयस्य तु न । कुतः । 'कामात्' सङ्कल्पादेव, सोऽकामयत बहु स्यामित्यादिना जगत्सर्गकर्तृत्वश्रवणात् । अतो जीवादन्यः परमात्मैवानन्दमयः ॥ १९ ॥

(ख) इतश्च । 'अस्मिन्' आनन्दमये मान्त्रवर्णिके परमात्मनि 'अस्य'

---

* ख-पुस्तके हि-शब्दो नोपलभ्यते ।

† चकारः ख-गपुस्तकयोर्न पठ्यते ।

भवतीति रसशब्दाभिधेयानन्दमय*लाभादयं जीवशब्दाभिलपनीयः। आनन्दीभवतीत्युच्यमाने यल्लाभाद्य आनन्दी भवति, स स एवेत्यनुन्मत्तः को ब्रवीतीत्यर्थः†॥

एवमानन्दमयः परं ब्रह्मेति निश्चिते सति, यदेष आकाश आनन्दो, विज्ञानमानन्दं ब्रह्मेत्यादिष्वानन्दशब्देनानन्दमय एव परामृश्यते। यथा विज्ञानशब्देन विज्ञानमयः। अत एवानन्दं ब्रह्मणो विद्वानिति व्यतिरेकनिर्देशः। अत एवैतमानन्दमयमात्मानमुपसंक्रामतीति फलनिर्देशश्च। उत्तरे चानुवाके पूर्वानुवाकोक्तानामन्नमयादीनाम्, अन्नं ब्रह्मेति व्यजानात्, प्राणो ब्रह्मेति व्यजानात्, मनो ब्रह्मेति व्यजानादिति प्रतिपादनात्, आनन्दो ब्रह्मेत्यप्यानन्दमयस्यैव प्रतिपादनमिति विज्ञायते। तत एव ‡ तत्राप्यानन्दमयमात्मानमुपसंक्रम्येत्युपसंहृतम्। अतः प्रधानशब्दाभिलप्यादर्थान्तरभूतस्य परस्य ब्रह्मणो जीवशब्दाभिलपनीयादपि वस्तुनोऽर्थान्तरत्वं सिद्धम्॥

यद्यपि मन्दपुण्यानां जीवानां कामाज्जगत्सृष्टिरतिशयितानन्दयोगो भयाभयहेतुत्वमित्यादि न सम्भवति। तथापि

---

जीवस्य ज्ञानिनः 'तद्योगम्' आनन्दयोगं 'शास्ति' फलत्वेन कथयति भगवती श्रुतिः। रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवतीति प्रत्यगात्मनो यल्लाभादानन्दयोगः स तस्मादन्यः परमात्मैवेत्यानन्दमयः परं ब्रह्मेति सिद्धम्॥ २०॥

---

* आनन्दलाभादिति ख०।

† अब्रवीदितीति ग०।

‡ अत एव चेति ख०, ग०।

विलक्षणपुण्यानामादित्ये*न्द्रचन्द्रप्रजापतिप्रभृतीनां सम्भवत्येवेतीमामाशङ्कां निराकरोति ।

अन्तस्तद्धर्मोपदेशात्† ॥ २१ ॥

(क) इदमाम्नायते छान्दोग्ये । य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य, यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति‡ नाम, स एष¶ सर्वेभ्यः पाप्मभ्य उदित, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद, तस्य ऋक् साम च गेष्णावित्यधिदैवतमथा-

(क) छन्दोगैरिदमाम्नायते । अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी, अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यत इत्यादि । तत्र आदित्यमण्डलाक्ष्णोरन्तःस्थत्वेन श्रूयमाणः पुरुषः किं जीवविशेष आहोस्वित् परमपुरुष इति संशयः । पुण्यबलाप्तै-श्वर्यः कश्चित् जीवविशेष इति पूर्वपक्षः । कुतः । हिरण्यश्मश्रुर्हिरण्य-केशोऽन्तरादित्येऽन्तरक्षिणि, ये चामुष्मात् पराञ्चो लोका इत्यादिना सश-रीरत्वपराश्रितत्वादिश्रवणात् । परस्य तु अशब्दमस्पर्शमरूपं, स भगवः कस्मिन् प्रतिष्ठितः, स्वे महिम्नि, एष सर्वेश्वर इत्यादिना तद्विपरीतश्रवणा-दादित्यान्तर्वर्तित्वं हिरण्मयरूपत्वञ्च न सम्भवति । तत्र परमपुरुष एवेति राद्धान्तः । कुतः । स एष सर्वेभ्यः पाप्मभ्य उदित इत्यादिना अपहत-

* मायिनामिन्द्रेति ख० ।

† अन्तस्तद्धर्म उपदेशादिति ख० । लिपिकरप्रमादविजृम्भणमेतत् ।

‡ उदितिर्नामेति ख० ।

¶ एष वै इति ग० ।

ध्यात्मम्*, अथ य एषोऽन्तरक्षिणि† पुरुषो दृश्यते, सैव ऋक् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतदेव रूपं यदमुष्य रूपं

पाप्मत्वादिपूर्वकसर्वलोककामेशत्वाद्युपदेशात्। तेषां जीवेष्वसम्भवात्। किञ्च। यदा पश्यः पश्यते रुक्मवर्णमादित्यवर्णं तमसः परस्तादित्यादिना सत्यसङ्कल्पत्वकल्याणगुणवत्त्वादिस्वाभाविकधर्मवत् ब्रह्मणि शरीरवत्त्वस्याप्यविरुद्धत्वात्। अत एव सत्यसङ्कल्पस्य भगवतः स्वेच्छयैव स्वानुरूपाप्राकृतशरीरसम्बन्धः। अशब्दमित्यादिवाक्यस्य च प्राकृतशब्दादिनिषेधपरत्वम्। नच पराश्रितत्वं तस्य वाच्यं, सर्वाश्रयत्ववत् सर्वान्तरत्वस्यापि, अन्तःप्रविष्टः शास्ता, सर्वभूतान्तरात्मेत्यादिशास्त्रसिद्धत्वादिति॥१।१।अ० ६॥

(सूत्रार्थस्तु।) एवं सामान्यतः क्षेत्रक्षेत्रज्ञयोः कारणत्वं निरस्य इदानीं विशेषतः प्राप्तैश्वर्याणामादित्यादिरूपचेतनानां तथात्वं निराकरोति। य एषोऽन्तरादित्ये हिरण्मयः पुरुषो हिरण्यश्मश्रुरित्यादौ श्रूयमाणः पुरुषाकारः परमात्मैव। कुतः। 'तद्धर्मोपदेशात्'। तस्य परमेश्वरस्यैव धर्माणामपहतपाप्मत्वोपासकसर्वपापमोचयितृत्वसर्वात्मकत्वादीनामस्मिन् वाक्ये उपदेशात्। स एष सर्वेषां लोकानामीशः सर्वेषां कामानाम्, तस्योदिति नाम, स एष सर्वेभ्य पाप्मभ्य उदित इत्यादिना प्रतिपादिता धर्मा हि पारमेश्वरा एव। श्रूयते च, तद्रूपस्यापि अप्राकृतत्वम्। वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तादित्यादौ। अतः प्रत्यगात्मनोऽर्थान्तरभूतो निरुपाधिकानवधिकातिशयानन्दोऽप्राकृतासाधारणदिव्यरूपः पुरुषोत्तमः परं ब्रह्म जगत्कारणमिति वेदान्तैः प्रतिपाद्यत इति निरवद्यम्॥२१॥

* ख-पुस्तके नामेत्यादि अध्यात्ममित्यन्तं न पठ्यते। अथाध्यात्ममितीति ग०।

† अन्तराक्षिणीति ग०।

यावदमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नामेति। तत्र सन्दिह्यते। किमयमक्ष्यादित्यमण्डलान्तरवर्ती पुरुषः पुण्योपचयनिमित्तैश्वर्य आदित्यादिशब्दाभिलप्यो जीव एव, आहोस्वित्तदतिरिक्तः परमात्मेति। किं युक्तम्। उपचितपुण्यो जीव एवेति। कुतः। सशरीरत्वश्रवणात्। शरीरसम्बन्धो हि जीवानामेव सम्भवति। *कर्मानुगुणप्रियाप्रिययोगायत्तो† हि शरीरसम्बन्धः। अत एव हि कर्मसम्बन्धरहितस्य मोक्षस्य प्राप्यत्वमशरीरत्वेनोच्यते। न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वावसन्तं न प्रियाप्रिये स्पृशत इति। सम्भवति च ‡ पुण्यातिशयात् ज्ञानाधिक्यं शक्त्याधिक्यञ्च। अत¶ एव लोककामेशत्वादि§ तस्यैवोपपद्यते। अत एव चोपास्यत्वं फलदायित्वञ्च पापक्षय||करत्वेन मोक्षोपयोगित्वञ्च। मनुष्येष्वप्युपचितपुण्याः केचिज्ज्ञानशक्त्यादिभिरधिकतरा दृश्यन्ते। ततश्च सिद्धगन्धर्वादयस्ततश्च देवा**स्ततश्चेन्द्रादयः। अतो ब्रह्मादिष्वन्यतम एवैकैकस्मिन् कल्पे उपचितपुण्यविशेषेणैवं प्रभूत††मैश्वर्यं प्राप्तो जगत्सृष्ट्याद्यपि करोतीति जगत्कारणत्वजगदन्तरात्मत्वादि-

---

* स्वकर्मानुगुणेति ख०, ग०।

† योगायेति ख०, ग०।

‡ चकारः ख-पुस्तके नोपलभ्यते।

¶ तत इति ख०, ग०।

§ कामेशित्वत्वादीति ख०। कामेशत्वादिति ग०। परन्तु अयुक्तं पठ्यते।

|| क्षपणेति ख०, ग०।

** देवता इति ग०।

†† एवम्भूतमिति ग०।

वाक्यमस्मिन्नेवोपचितपुण्यविशेषे सर्वज्ञे सर्वशक्तौ वर्तते। अतो जीवान्नातिरिक्तः परमात्मा नाम कश्चिदस्ति। एवञ्च सति, अस्थूलमनण्वह्रस्वमित्यादयो जीवात्मन एव स्वरूपाभिप्राया भवन्ति। मोक्षशास्त्राण्यपि तत्स्वरूपतत्प्राप्त्युपायो*पदेशपराणीत्येवं प्राप्तेऽभिधीयते। 'अन्तस्तद्धर्मोपदेशात्'। अन्तरादित्ये अन्तरा†क्षिणि च यः पुरुषः प्रतीयते, स जीवादन्यः परमात्मैव। कुतः। 'तद्धर्मोपदेशात्' जीवेष्वसम्भवात् तदतिरिक्तस्यैव परमात्मनो धर्मोऽयमपहतपाप्मत्वादिः, स एष सर्वेभ्यः पाप्मभ्य‡ उदित इत्यादिनोपदिश्यते। अपहतपाप्मत्वं ह्यपहतकर्मत्वं कर्मवश्यतागन्धरहितत्वमित्यर्थः¶। कर्माधीनसुखदुःखभागित्वेन कर्मवश्या हि जीवाः। अतोऽपहतपाप्मत्वं जीवादन्यस्य परमात्मन एव धर्मः। तत्पूर्वकं स्वरूपोपाधिकं लोककामेश§त्वं सत्यसङ्कल्पत्वादिकं सर्वभूतान्तरात्मत्वञ्चास्यैव धर्मः। ||यथाह। एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प इति। तथा, एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायण इति, सोऽकामयत बहु स्यां प्रजायेयेत्यादि** सत्यसंकल्पत्वपूर्वक-

* तमुपायेति ख०। अशुद्धमेतत्।

† अन्तराक्षिणीति ग०।

‡ पाप्मभ्य इति ख-पुस्तकं न पठति।

¶ इत्यर्थ इति ख-पुस्तके नालोक्यते।

§ लोकानामीशत्वमिति ख०।

|| यद्यप्याहेति ख०।

** इत्यपीति ख०।

समस्तचिदचिद्वस्तुसृष्टियोगो निरुपाधिकभयाभयहेतुत्वं वाङ्म-नसपरिमिति*कृतपरिच्छेद-रहितता†नवधिकातिशयानन्दयोग इत्यादयोऽकर्मसम्बाद्या स्वाभाविका धर्मा जीवस्य न सम्भवन्ति॥

यत्तु, शरीरसम्बन्धान्न जीवातिरिक्त इत्युक्तम्। तदसत्। न हि शरीरवत्त्वं कर्मवश्यतां साधयति, सत्यसङ्कल्पस्येच्छयापि शरीरसम्बन्धसम्भवात्। अथोच्येत, शरीरं नाम त्रिगुणात्मकप्रकृतिपरिणामरूप‡भूतसङ्घातः, तत्सम्बन्धश्चापहतपाप्मनः सत्यसंकल्पस्य पुरुषस्येच्छया न सम्भवति, अपुरुषार्थत्वात्। कर्मवश्यस्य तु स्वरूपानभिज्ञस्य कर्मानुगुणफलोपभोगायानिच्छतोऽपि तत्सम्बन्धोऽवर्जनीय इति। स्यादेतदेवं, यदि गुणत्रय¶-मयः प्राकृतोऽस्य देहः स्यात्। स तु स्वाभिमतस्वानुरूपोऽप्राकृत एवेति सर्वमुपपन्नम्॥

एतदुक्तं भवति। परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सकलेतरविलक्षणस्य स्वाभाविकानवधिकातिशयासंख्येयकल्याणगुणगणाश्च सन्ति। तद्वदेव स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तकल्याणगुणगणनिधिदिव्यरूपमपि स्वाभाविकमस्ति। तदेवोपासकानुग्रहेण तत्प्रतिपत्त्यनुरूपसंस्थानं करोति। अपारकारुण्यसौशील्यवात्सल्यौ-

* परिमितिकृतेति न दृश्यते ख-पुस्तके। परिमितेति ग०।

† रहितानवधिकेति ख०, ग०।

‡ रूपेति न पठ्यते ख-पुस्तके।

¶ त्रिगुणेति ख०।

दार्यजलधि*र्निरस्तनिखिलहेयगन्धोऽपहतपाप्मा परमात्मा † परब्रह्म पुरुषोत्तमो नारायण इति, यतो वा इमानि भूतानि जायन्ते, सदेव सोम्येदमग्र आसीत्, आत्मा वा इदमेक एवाग्र आसीत्, एको ह वै नारायण आसीत्, न ब्रह्मा नेशान इत्यादिषु निखिलजगदेककारणतयावगतस्य परस्य ब्रह्मणः, सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्मेत्यादिष्वेवम्भूतं‡ स्वरूपमित्यवगम्यते। निर्गुणं निरञ्जनम् अपहतपाप्मा, विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः,

न तस्य कार्यं करणञ्च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च॥
तमीश्वराणां परमं महेश्वरं
तं दैवतानां परमञ्च दैवतम्।
सकारणं करणाधिपाधिपो
नचास्य कश्चिज्जनिता नचाधिपः।
सर्वाणि रूपाणि विचिन्त्य धीरः।
नामानि कृत्वाभिवदन् यदास्ते
वेदाहमेतं पुरुषं महान्तम्।
आदित्यवर्णं तमसः परस्तात्।

---

* जलनिधिरिति ख०, ग०।

† परमात्मेति न पठति ख-पुस्तकम्।

‡ एवम्भूतस्वरूपमिति ग०।

सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधीत्यादिषु परस्य ब्रह्मणः प्राकृतहेयगुणान् प्राकृतहेय*देहसम्बन्धं तन्मूलकर्मवश्यता-सम्बन्धञ्च प्रतिषिध्य कल्याणगुणान् कल्याणरूपञ्च वदति। तदिदं स्वाभाविकमेव रूपमुपासकानुग्रहेण तत्प्रतिपत्त्यनुगुणा-कारं† देवमनुष्यादिसंस्थानं करोति स्वेच्छयैव परमकारु-णिको भगवान्। तदिदमाह श्रुतिः। अजायमानो बहुधा विजायत इति। स्मृतिश्च।

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया॥
परित्राणाय साधूनां विनाशाय च दुष्कृतामिति॥

साधवो ह्युपासकास्तत्परित्राणमेवोद्देश्यम्। आनुषङ्गिकस्तु दुष्कृतां विनाशः, संकल्पमात्रेणापि तदुपपत्तेः। प्रकृतिं स्वामिति प्रकृतिः स्वभावः। स्वमेव स्वभावमास्थाय, न संसारिणां स्वभाव-मित्यर्थः। आत्ममाययेति स्वसंकल्परूपेण ज्ञानेनेत्यर्थः। माया वयुनं‡ ज्ञानमिति ज्ञानपर्यायमपि मायाशब्दं नैघण्टुका¶ अधीयते। आह च भगवान् पराशरः।

समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्॥

---

* हेयेति न पठ्यते ख-पुस्तके।

† अनुगुणाकारमिति ख०, ग०। न युक्तमेतत्।

‡ वैनमिति ग०। लिपिकरप्रमादविजृम्भणमेतत्।

¶ नैर्घण्टिका इति ख०।

§ तद्विश्वरूपेति ख०, ग०।

समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।
देवतिर्यङ्मनुष्याख्यचेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजेति ।

अवताररूपस्याप्राकृतत्वमुच्यते * । महाभारते च, अर्चावताररूपस्याप्यप्राकृतत्वमुच्यते † ।

न भूतसङ्घसंस्थानो देहोऽस्य परमात्मन इति ।

अतः परस्यैव ब्रह्मण एवंरूपवत्त्वादयमपि तस्यैव धर्मः । अत आदित्यमण्डलाद्यधिकरण आदित्यादिजीवव्यतिरिक्तः परमात्मैव ॥

## भेदव्यपदेशाच्चान्यः ॥ २२ ॥

(क) आदित्यादिजीवेभ्यो 'भेदो व्यपदिश्यते अस्य परमात्मनो, य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद, यस्यादित्यः शरीरं, य आदित्यमन्तरो यमयति, य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद, यस्यात्मा शरीरं, य आत्मा-

---

(क) इतश्च आदित्याद्यन्तःस्थः हिरण्मयरूपः परमेश्वर एव । कुतः । य आदित्ये तिष्ठन्नादित्यादन्तरः, य आत्मनि तिष्ठन्नात्मनोऽन्तरः, यमादित्यो न वेदेत्याद्यन्तर्यामिब्राह्मणोक्त्या तत्तदन्तर्यामितया तत्तन्नियन्तृतया च आदित्यादिजीववर्गात् परमात्मनो 'भेदेन 'व्यपदेशात्' । अत एव

---

* अवतारेत्यादिपाठः ख-ग-पुस्तकयोर्न पठ्यते ।

† अर्चावतारेत्यादिपाठः ख-पुस्तके न दृश्यते ।

‡ एवंरूपरूपत्वादिति ग० ।

नमन्तरो यमयति, यस्याक्षरं शरीरं यमक्षरं न वेद, यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं, यं मृत्युर्न वेद, एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण इति च, अस्मादप्यपहतपाप्मनः परमात्मनः सर्वान् जीवान् शरीरत्वेन व्यपदिश्य तेषा*मन्तरात्मत्वेनैनं† व्यपदिशति। अतः सर्वेभ्यो हिरण्यगर्भादिजीवेभ्योऽन्य एव परमात्मेति सिद्धम्॥

यतो वा इमानि भूतानि जायन्त इति जगत्कारणं ब्रह्मेत्यवगम्यते। किं तज्जगत्कारणमित्यपेक्षायां, सदेव सोम्येदमग्र आसीत्, तत्तेजोऽसृजत, आत्मा वा इदमेक एवाग्र आसीत्, स इमांल्लोकानसृजत, तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इति साधारणैः शब्दैर्जगत्कारणे निर्दिष्टे, ईक्षणविशेषानन्दविशेषरूपविशेषैः स्वभावात् प्रधानक्षेत्रज्ञादिव्यतिरिक्तं ब्रह्मेत्युक्तम्। इदानीमाकाशादिविशेष‡शब्दै¶र्निर्दिश्य जगत्कारणत्वजगदैश्वर्यादिवादेऽप्याकाशादिशब्दाभिधेयतया प्रसिद्धचिदचिद्वस्तुनोऽर्थान्तरमुक्तलक्षणमेव ब्रह्मेति प्रतिपाद्यते, आकाशस्तल्लिङ्गादित्यादिना पादशेषेण।

---

अपहतपाप्मत्वादिविशिष्टो नारायणः प्रधानात् प्रत्यगात्मनश्च 'अन्यः' अर्थान्तरभूतो निखिलजगदेककारणमिति सिद्धम्॥ २२॥

---

* एवमिति ख०।

† एवमिति ग०।

‡ विशेषेति ख-पुस्तके नोपलभ्यते।

¶ विशेषं निर्दिश्येति ख०।

## आकाशस्तल्लिङ्गात्॥ २३॥

(क) इदमाम्नायते छान्दोग्ये। अस्य लोकस्य का गतिरित्याकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति, आकाशो ह्येवैभ्यो भूतेभ्यो*

(क) छान्दोग्ये शालावत्यजैवलिसंवादे श्रूयते। अस्य लोकस्य का गतिरित्युक्ते प्रतिवचनम्, आकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति, आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणमिति। अत्र आकाशशब्दनिर्दिष्टः किं प्रसिद्धाकाशो जगत्कारणम्। उत समस्तचिदचिद्विलक्षणः परमात्मेति संशयः। भूताकाश इति पूर्वपक्षः। यतः, प्रसिद्धतरप्रयोगे तस्यैव झटिति बुद्धावारोहणात्। ब्रह्मणि तु गौण आकाशशब्दः, विभुत्वादिधर्मैस्तस्य आकाशसादृश्यात्। यतो वा इमानि भूतानि जायन्त इत्यादिसामान्यलक्षणस्य सदादिशब्दानामपि साधारणत्वेन, आकाशादेव समुत्पद्यन्त इति वाक्यशेषे विशेषपर्यवसानात्। ईक्षणादयोऽपि आकाश एव जगत्कारणमिति निश्चिते सति तत्र गौणा वर्णनीयाः। तस्मादाकाशशब्देन भूताकाश एवेति प्राप्ते राद्धान्तः। सर्वत्र ब्रह्मैव आकाशशब्दनिर्दिष्टम्। कुतः। सर्वाणि ह वा इमानि भूतानीति प्रसिद्धवन्निर्देशात्, प्रसिद्धेश्च ईक्षापूर्वकत्वात्। तथा, यदेष आकाश आनन्दो न स्यात्, आकाशो ह वै नामरूपयोर्निर्वहितेत्यादिरूढ़िरत्या च चिदचिद्विलक्षणे ब्रह्मण्येव आकाशशब्दो मुख्य इति। (१।१।आ।७)

(सूत्रार्थस्तु) सर्वाणि ह वा इमानि भूतान्याकाशादुत्पद्यन्ते, आकाशं

* भूतेभ्य इति न पठ्यते ख-ग-पुस्तकयोः।

ज्यायान्, आकाशः परायणमिति । तत्र सन्देहः । किं प्रसिद्धाकाश एवात्राकाशशब्देनाभिधीयते । उतोक्तलक्षणमेव ब्रह्मेति । किं प्राप्तम् । प्रसिद्धाकाश इति । कुतः । शब्दैकसमधिगम्ये वस्तुनि य एवार्थो व्युत्पत्तिसिद्धः शब्देन प्रतीयते, स एव ग्रहीतव्यः । अतः प्रसिद्धाकाश एव चराचरात्मकभूतजातस्य कृत्स्नस्य कारणम् । अतः, तस्मादनतिरिक्तं ब्रह्म ॥

नन्वीक्षापूर्वकसृष्ट्यादिभिरचेतनाज्जीवाच्च व्यतिरिक्तं ब्रह्मेत्युक्तम् । सत्यमुक्तम् । दुरुक्तन्तु * तत् । तथाहि, यतो वा इमानि भूतानि जायन्ते तद्ब्रह्मेत्युक्ते, कुत इमानि भूतानि जायन्ते इत्यादिविशेषाकाङ्क्षायां, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते इत्यादिना †विशेषप्रतीतेर्जगज्जन्मादिकारणमाकाश एवेति निश्चिते, सदेव सोम्येदमग्र

---

प्रत्यस्तं यन्तीत्यादिषु 'आकाशशब्देन परमात्मैव निर्दिष्टः । कुतः । 'तल्लिङ्गात्' । लिङ्गं स्वावच्छिन्नं धर्मिविशेषं गमयति परिच्छिनत्तीति व्युत्पत्तिवशात् तस्य परब्रह्मण एव सर्वकारणत्वज्यायस्त्वपरायणत्वादेर्लिङ्गादव्यभिचारिधर्मात् । नहि तेषां भूताकाशे सम्भवः । तस्य वाय्वादीनां कारणत्वादिसम्भवेऽपि, आकाशादेवेत्येवकारस्य सर्वाणीति पदस्य च पाठान्न सर्वकारणत्वादिलिङ्गानां तत्र सम्भवः । तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यात्मकार्यत्वश्रवणाच्च । स्वस्य स्वकारणत्वे आत्माश्रयापत्तेः । तस्मादाकाशादिशब्दवाच्यः परमात्मैवेति सिद्धम् ॥ २३ ॥

---

* अयुक्तमिति ग० ।

† इत्यादिविशेष इति ख० ।

आसीदित्यादिष्वपि सदादिशब्दाः साधारणाकारास्तमेव विशेषमाकाशमभिदधति। आत्मा वा इदमेक एवाग्र आसीदित्यादिष्वा*त्मशब्दोऽपि तत्रैव वर्तते। तस्यापि हि चेतनैकान्तत्वं न सम्भवति, यथा मृदात्मको घट इति। आप्नोतीत्यात्मेति सुतरामाकाशेऽप्यात्मशब्दो वर्तते†। अत एवमाकाश एव कारणं ब्रह्मेति निश्चिते सतीक्षणादयस्तदनुगुणा गौणा वर्णनीयाः। यदि हि साधारणशब्दैरिव सदादिभिः कारणमभ्यधायिष्यत¶, ईक्षणाद्यर्थानुरोधेन चेतनविशेष एव कारणमिति निरदेक्ष्यत। आकाशशब्देन तु विशेष§ एव निश्चित इति नार्थस्वाभाव्यात् निर्णेतव्यमस्ति। ननु, आत्मन आकाशः सम्भूत इत्याकाशस्यापि कार्यत्वं प्रतीयते। सत्यम्। सर्वेषामेवाकाशवाय्वादीनां सूक्ष्मावस्था स्थूलावस्था चेत्यवस्थाद्वयमस्ति। तत्राकाशस्य सूक्ष्मावस्था कारणं, स्थूलावस्था तु कार्यम्। आत्मन आकाशः सम्भूत इति स्वस्मादेव सूक्ष्मरूपात् स्वयं स्थूलरूपः सम्भूत इत्यर्थः। सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इति सर्वस्य जगत आकाशादेव प्रभवाप्ययादिश्रवणात् तदेव जगत्‖का-

* इत्यादिष्वपीति ख०।

† तस्यापीत्यादिर्वर्ततइत्यन्तः पाठः ख-पुस्तके न दृश्यते। लिपिकरप्रमाद एवात्र निदानम्।

‡ समीक्षणादय इति ग०।

¶ अभ्यधायिष्यतेति ग०। न समीचीनमेतत्।

§ चेतनविशेष इति ख०।

‖ तदेव हि कारणमिति ग०।

रणं ब्रह्मेति निश्चितम् । यत एवं प्रसिद्धाकाशादनतिरिक्तं ब्रह्म । अत एव, यदेष आकाश आनन्दो न स्यात्, आकाशो ह वै नामरूपयोर्निर्वहितेत्येवमादिनिर्देशोऽप्युपपन्नतरः * । अतः प्रसिद्धाकाशादनतिरिक्तं ब्रह्मेत्येवं प्राप्ते ब्रूमः । 'आकाशस्तल्लिङ्गात्' । 'आकाशशब्दाभिधेयप्रसिद्धाकाशादचेतनादर्थान्तरभूतो यथोक्तलक्षणः परमात्मैव । कुतः । 'तल्लिङ्गात्' । निखिलजगदेककारणत्वं सर्वस्माज्ज्यायस्त्वं परायणत्व†मित्यादीनि परमात्मलिङ्गान्युपलभ्यन्ते । निखिलजगदेककारणत्वं ह्यचिद्वस्तुनः प्रसिद्धाकाशशब्दाभिधेयस्य नोपपद्यते । चेतन‡वस्तुनस्तत्कार्यत्वासम्भवात् । परायणत्वञ्च ¶ चेतनानां परमप्राप्यत्वं, तच्चाचेतनस्य हेयस्य § सकलपुरुषार्थविरोधिनो न सम्भवति । सर्वस्माज्ज्यायस्त्वञ्च निरुपाधिकं सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयोत्कर्षः । तदप्यचितो नोपपद्यते ॥

यदुक्तं, जगत्कारणविशेषाकाङ्क्षायामाकाशशब्देन विशेष‖समर्पणादन्यत्सर्वं तदनुरूपमेव वर्णनीयमिति । तदयुक्तम् । सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इति प्रसिद्धवन्निर्देशात् । प्रसिद्धवन्निर्देशो हि प्रमाणान्तरप्राप्तिम-

* निष्पन्न इति ग० । पाठोऽयं नास्मभ्यं रोचते ।

† परायणमिति क०, ख० ।

‡ अचेतनेति ख० । अयुक्तमेतत् ।

¶ ख-पुस्तके चकारो नोपलभ्यते ।

§ देहस्येति ख-ग-पुस्तकयोः पठ्यते । पाठोऽयं न समीचीनः ।

‖ सकलपुरुषार्थविरोधिन इत्यादिर्विशेषेत्यन्तः पाठः ख-पुस्तके लिपिकरप्रमादात् पतित इति ज्ञातव्यम् ।

पेक्षते। प्रमाणान्तराणि च, सदेव सोम्येदमग्र आसीदित्येवमादीन्येव वाक्यानि। तानि च यथोदितप्रकारेणैव ब्रह्म प्रतिपादयन्तीति तत्प्रतिपादितं ब्रह्म आकाशशब्देन प्रसिद्धवन्निर्दिश्यते। सम्भवति च परस्य ब्रह्मणः प्रकाशकत्वादाकाशशब्दाभिधेयत्वम्, आकाशते आकाशयति चेति। किञ्च। अनेनाकाशशब्देन विशेषसमर्पण*क्षमेणापि चेतनांशं प्रत्यसम्भावितकारणभावमचेतनविशेषमभिदधानेनां†, तदैक्षत बहु स्यां प्रजायेयेति, सोऽकामयत बहु स्यां प्रजायेयेत्यादिवाक्यशेषावधारितसार्वज्ञ्यसत्यसङ्कल्पत्वादिविशिष्टापूर्वार्थप्रतिपादनसमर्थवाक्यार्थान्यथाकरणं न प्रमाणपदवीमधिरोहति। एवमपूर्वानन्तविशेषणविशिष्टापूर्वार्थप्रतिपादनसमर्थानेकवाक्यगतिसामान्यस्यैकेनानुवादरूपेणान्यथा कर्तुं न ‡ शक्यते॥

यत्तु, आत्मशब्दश्चेतनैकान्तो न सम्भवति। मृदात्मको घट इत्यादिषु दर्शनादित्युक्तम्। तत्रोच्यते। यद्यपि चेतनादन्यत्रापि क्वचिदात्मशब्दः प्रयुज्यते, तथापि शरीरप्रतिसम्बन्धिन्यात्मशब्दस्य¶ प्रयोगप्राचुर्यात्, आत्मा वा इदमेक एवाग्र आसीत्, आत्मन आकाशः सम्भूत इत्यादिषु § शरीरप्रतिसम्बन्धि‖चेतन

---

* क्षमेणेति ख०। अपपाठोऽयम्।

† अभिधानेनेति ग०। अयुक्तमेतत्।

‡ ग-पुस्तके नेति लिपिकरप्रमादात् पतितम्।

¶ आकाशशब्दस्येति ख०। असमीचीनोऽयं पठ्यते।

§ तथापीत्यादिरित्यादिष्वित्यन्तः पाठः ग-पुस्तके न दृश्यते।

‖ सम्बन्धी इति ख०।

एव प्रतीयते। यथा गोशब्दस्यानेकार्थवाचित्वेऽपि प्रयोगप्राचुर्यात् सास्नादिमानेव स्वतः प्रतीयते। अर्थान्तरप्रतीतिस्तु तत्तदसाधारण*निर्देशापेक्षा। तथा स्वतः प्राप्तं शरीरप्रतिसम्बन्धिचेतनाभिधान†मेव, स ऐक्षत लोकान्नु सृजा इति, सोऽकामयत बहु स्यां प्रजायेयेत्यादि तत्तद्वाक्यशेषा एव स्थिरीकुर्वन्ति। एवं ‡ वाक्यशेषावधारितानन्यसाधारणानेकापूर्वार्थविशिष्टं निखिलजगदेककारणं, सदेव सोम्येदमग्र आसीदिति वाक्यसिद्धं ब्रह्मैवाकाशशब्देन प्रसिद्धवत्, सर्वाणि ह वा इमानि भूतानीत्यादिवाक्येन निर्दिश्यत इति सिद्धम्॥

## अत एव प्राणः॥ २४॥

(क) इदमाम्नायते छान्दोग्ये। प्रस्तोतर्या¶ देवता प्रस्तावमन्वायत्तेति प्रस्तुत्य, सा कतमा§ देवता, प्राण इति होवाच,

---

(क) छान्दोग्ये आकाशवाक्यानन्तरमुद्गीथे श्रूयते। प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता, तांचेदविद्वान् प्रास्तोष्यो मूर्धा ते व्यपतिष्यदिति प्रस्तुत्य कतमा सा देवतेति प्राण इति होवाच। सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते, सैषा देवता प्रस्तावमन्वायत्तेति। तत्र प्राणबन्धनं हि सोम्य मनः प्राणस्य प्राणमित्यादौ ब्रह्मणि प्राणशब्दप्रयोगात् प्राणवायौ च प्रसिद्धतरत्वात् सर्वजगत्कारणतया प्राणशब्द-

---

* तदसाधारणेति ख०।

† चेतनाविधानमिति ख०, ग०।

‡ तत्तद्वाक्यशेषा—एवमिति ग-पुस्तके नावलोक्यते।

¶ प्रस्तोतव्या इति ख०, ग०। नितरामयुक्तं पद्यते।

§ कतमा सति ख० ग०।

सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते* सैषा देवता प्रस्तावमन्वायत्ता, तां चेदविद्वान् प्रास्तोष्यो मूर्धा ते व्यपतिष्यदिति। अत्र प्राणशब्दोऽप्याकाशशब्दवत् प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्तते, तदसाधारणनिखिलजगत्प्रवेशनिष्क्रमणादिलिङ्गात्प्रसिद्धवत् निर्दिष्टात् †।

निर्दिष्टः किं वायुवृत्तिप्राणः। उत, उक्तलक्षणं परं ब्रह्मेति संशयः। तत्र वायुवृत्तिप्राण एवेति पूर्वपक्षः। कुतः। सर्वस्य जगतः प्राणाधीनस्थितिदर्शनात् प्रसिद्धिबलाच्च स एव निखिलजगदेककारणतया निर्देशमर्हतीति। अत्र राद्धान्तः। शिलाकाष्ठादिषु अचेतनेषु प्राणायत्तस्थित्यभावात् प्राणस्य सर्वकारणत्वाद्यसम्भवाच्च, सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्तीति प्रसिद्धवन्निर्देशेन प्राणशब्दनिर्दिष्टं परमेव ब्रह्म। किञ्च। यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणमित्यादि श्रुत्या प्राणे कार्यप्रवेशोद्यमदर्शनात् स एवात्र उपास्यतया विधीयत इति न शङ्कनीयम्। तत्र इन्द्रियमात्रसंवेशादिसम्भवेऽपि महाभूतानां चेतनानाञ्च संवेशादेस्तत्राश्रवणादिति परमात्मैव प्राणशब्देनाभिधीयते॥ १।१। अ ९॥

(सूत्रार्थस्तु) अतिदेशमुखेनाह,—'अत एव' पूर्वसूत्रोक्ततल्लिङ्गादिति हेतोरेव 'प्राणशब्दनिर्दिष्टं ब्रह्मेत्यर्थः। सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्तीत्यादिना महाभूतसंवेशनादिकं ब्रह्मलिङ्गं प्राणवाक्ये श्रूयते। तस्मात् परमात्मैव, प्राणयति सर्वं जगत् यस्मिन्निति व्युत्पत्त्या प्राणशब्देनाभिधीयते॥ २४॥

* अत्युज्जिहते इति ख०।

† निर्देशादिति ग०।

अधिकाशङ्का तु, अत्र * कृत्स्नभूतजातस्य प्राणाधीनस्थिति-प्रवृत्त्यादि† दर्शनात्प्रसिद्ध एव प्राणो जगत्कारणतया निर्देश-मर्हतीति। परिहारस्तु शिलाकाष्ठादिषु चेतनस्वरूपे च ‡ तदभावात्, सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंवि-शन्ति, प्राणमभ्युज्जिहत इति नोपपद्यत इति। अतः ¶ प्राणयति सर्वाणि भूतानीति § परं ब्रह्मैव प्राणशब्देनाभि-धीयते। अतः प्रसिद्धाकाशप्राणादेरन्यदेव निखिलजगदेक-कारणमपहतपाप्मत्वसार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणगणं || परं ब्रह्मैवाकाशप्राणादिशब्दाभिधेयमिति सिद्धम् ॥

अतः परं जगत्कारणत्वव्याप्तेनैकेनापि निरतिशयोत्कृष्ट-गुणेन जुष्टं ज्योतिरिन्द्रादिशब्दैरर्थान्तरप्रसिद्धैरप्यभिधीयमानं परं ब्रह्मैवेति प्रतिपाद्यते—ज्योतिश्चरणाभिधानादित्यादिना।

ज्योतिश्चरणाभिधानात् ॥ २५ ॥

(क) इदमाम्नायते छान्दोग्ये। अथ यदतः ** परो दिवो

---

(क) छान्दोग्ये गायत्रीविद्यायामिदमाम्नायते। अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु,

---

* अत्रेति ख-ग-पुस्तकयोः न पठ्यते।

† प्रवृत्त्यादीति ख०। पाठोऽसौ सुमनसां वैमनस्यमावहति।

‡ स्वरूपवदिति ख०। अयुक्तमेतत्।

¶ कुत इति ख०। अपपाठोऽयम्।

§ कृत्स्नेति पठति ग-पुस्तकम्।

|| कल्याणगुणमिति ग०।

** परत इति ख०। असाम्प्रदायिकोऽयं पाठः।

ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु, इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिरिति। तत्र सन्देहः। किमयं ज्योतिःशब्दनिर्दिष्टो निरतिशय*दीप्ति-

इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिरिति। अत्र किं निरतिशयदीप्तियुक्ततया ज्योतिःशब्देन प्रसिद्धादित्यादिज्योतिरभिधीयते। उत, परं ब्रह्मेति संशयः। प्रसिद्धज्योतिरिति पूर्वपक्षः। कुतः। तस्य तमोनिवारकत्वप्रसिद्धेर्द्युमर्यादत्वश्रवणाच्च। नहि सर्वव्यापिनो ब्रह्मणो मर्यादादिकं सम्भवति। अपिच। इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिरिति कौक्षेयज्योतिषैक्यावगमात् स्ववाक्ये तदतिरिक्तपरब्रह्मासाधारणलिङ्गादर्शनात्। अत्र राद्धान्तः। प्रसिद्धज्योतिषोऽन्यदेव निरतिशयदीप्तिमत्तरं परं ब्रह्म ज्योतिःशब्दनिर्दिष्टम्। कुतः। यतोऽस्य ज्योतिषः पूर्वस्मिन् वाक्ये, पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीत्यत्र द्युसम्बन्धितया निर्दिष्टस्यैव चतुष्पदो ब्रह्मणः, अथ यदतः परो दिवो ज्योतिरिति प्रत्यभिज्ञानात्। तच्च परमेव ब्रह्मेति विज्ञायते, तस्य सर्वभूतपादत्वेन व्यपदेशात्॥ १। १। अ १०॥

(सूत्रार्थस्तु।) अथ यदतः परो दिवो ज्योतिर्दीप्यते, तद्यदिदमन्तः पुरुषे ज्योतिरित्यत्र 'ज्योतिःशब्दनिर्दिष्टं परं ब्रह्मैव। कुतः। 'चरणाभिधानात्'। तथाहि ज्योतिर्वाक्यात् पूर्ववाक्ये, पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीत्यत्र सर्वभूतचरणत्वव्यपदेशात्। सर्वभूतपादत्वञ्च परब्रह्मण एव उपपद्यते। एवञ्च, यदतः पर इत्यत्र यच्छब्दस्य सर्वनामत्वेन प्रसिद्धार्थवाचकत्वात्, पूर्ववाक्ये द्युसम्बन्धित्वेन प्रसिद्धं ब्रह्म, अत्रापि द्युसम्बन्धाविशेषात् तदेव तच्छब्देन प्रत्यभिज्ञायते। अत्र च कौक्षेय-

* संशय इति ग०। प्रामादिकोऽयमुपलभ्यते पाठः।

युक्तोऽर्थः * प्रसिद्धमादित्यादिज्योतिरेव कारणभूतं ब्रह्म। उत समस्तचिदचिद्वस्तुजातविसजातीयः परमकारणभूतोऽमितभाः सर्वज्ञः † सत्यसङ्कल्पः पुरुषोत्तम इति। किं युक्तं, प्रसिद्धमेव ज्योतिरिति। कुतः। प्रसिद्धवन्निर्देशेऽप्याकाशप्राणादिवत् स्ववाक्योपात्तपरमात्मव्याप्तलिङ्गविशेषादर्शनात् परमपुरुषप्रत्यभिज्ञानासम्भवात् कौक्षेयज्योतिषैक्योपदेशाच्च। प्रसिद्धमेव ज्योतिः कारणत्वव्याप्तनिरतिशयदीप्तियोगात् जगत्कारणं ब्रह्मेत्येवं प्राप्ते प्रचक्ष्महे। 'ज्योतिश्चरणाभिधानात्'। द्युसम्बन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुष एव। कुतः। ‡ पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीत्यस्यैव द्युसम्बन्धिनश्चरणत्वेन ¶ सर्वभूतानामभिधानात्। एतदुक्तं भवति। यद्यपि, अथ यदतः परो दिवो § ज्योतिर्दीप्यत इत्यस्मिन् वाक्ये परमपुरुषासाधारणलिङ्गं || नोप-

---

ज्योतिषैक्याभिधानं फलायोपदिश्यते इति न कश्चिद्विरोधः। अखिलजगत्कारणभूतः परमपुरुषोऽप्राकृतस्वासाधारणादित्यवर्णदिव्यरूपः परस्ताद्वर्तत इति तस्यैव निरतिशयदीप्तियोगात् ज्योतिःशब्दाभिधेयत्वम् ॥ २५ ॥

---

* युक्तोऽर्थेति ख०। युक्तार्थेति ग०। उभयत्राप्युपलभ्यमानौ पाठभेदौ नितरामयुक्तौ।

† अमितभाः सर्वज्ञ इति न पठति ग-पुस्तकम्।

‡ एतावानस्य महिमा ततो ज्यायांश्च पुरुष इत्यधिकं पठति ख-पुस्तकम्।

¶ द्युसम्बन्धिचरणत्वेनेति ख०।

§ दिव्य इति ग०।

|| असाधारणं लिङ्गमिति ख०, ग०।

लभ्यते। तथापि पूर्ववाक्ये द्युसम्बन्धितया परमपुरुषनिर्देशादिदमपि द्युसम्बन्धिज्योतिः स एवेति प्रत्यभिज्ञायत इति। कौक्षेयज्योतिषैक्योपदेशश्च फलाय तदात्मकत्वानुसन्धानविधिरिति न कश्चिद्दोषः। कौक्षेयज्योतिषश्च तदात्मकत्वं भगवता स्वयमेवोक्तम्।

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। इति॥

## छन्दोऽभिधानान्नेति चेन्न तथाचेतोऽर्पणनिगमात् तथाहि दर्शनम्॥ २६॥

(क) पूर्वस्मिन् वाक्ये, गायत्री वा इदं सर्वमिति गायत्र्याख्यं

---

(क) पूर्वत्र, गायत्री वा इदं सर्वमिति गायत्र्याख्य'छन्दसः प्रकृतत्वात्, पादोऽस्य सर्वा भूतानीति सर्वभूतपादत्वेनाभिधानाच्च' 'न' ब्रह्मेति' 'चेत्'। 'न'। 'तथाचेतोऽर्पणनिगमात्'। न ह्यक्षरसन्निवेशमात्रायाः गायत्र्याः सर्वात्मकत्वं समञ्जसं, किन्तु तद्द्वारेण ब्रह्मणि 'चेतोऽर्पणं' चित्तसमाधानं निगम्यते। तथा च, यथा सूचीद्वारा सूत्रप्रवेशः, तथा गायत्रीद्वारा बुद्धिस्तत्प्रतिपाद्ये ब्रह्मणि प्रविशेदिति भावः। गायत्रीसादृश्यानुसन्धानं वा फलार्थमत्रोपदिश्यते। तत्र दृष्टान्तः। 'तथाहि दर्शनम्'। यथा गायत्री षडक्षरैः पादैश्चतुष्पदा, तथा ब्रह्मापि चतुष्पादिति चतुष्पात्त्वयोगात् सादृश्यम्। तथाह्यन्यत्रापि छन्दोऽभिधायी शब्दः सादृश्यादर्थान्तरे प्रयुज्यमानो दृश्यते। यथा संवर्गविद्यायां, ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत् कृतमित्युपक्रम्य, सैषा विराट्—इत्युक्तम्। किञ्च। सर्वात्मकतया ब्रह्मणो लिङ्गेन गायत्रीप्रकरणबाधः। यदाह भगवान् जैमिनिः। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति। अतः परं ब्रह्मैव गायत्रीशब्देनाभिधीयते॥ २६॥

छन्दोऽभिधाय, तदेतदृचाभ्यनूक्तमित्युदाहृतायाः, तावानस्य महिमा—इत्यस्या ऋचोऽपि 'छन्दोविषयत्वान्नात्र परमपुरुषाऽभिधानमिति चेत्, न'। 'तथा चेतोऽर्पणनिगमात्'। न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते। छन्दोमात्रस्य सर्वात्मकत्वानुपपत्तेः। अपि तु, ब्रह्मण* एव गायत्री† चेतोऽर्पणमिह निगम्यते। ब्रह्मणि गायत्रीसादृश्यानुसन्धानं फलायोपदिश्यत इत्यर्थः। सम्भवति च, पादोऽस्य सर्वा भूतानि‡ त्रिपादस्यामृतं दिवीति चतुष्पदो ब्रह्मणः चतुष्पदया§ गायत्र्या सादृश्यम्। चतुष्पदा च गायत्री क्वचित् दृश्यते। तद्यथा—इन्द्रः शचीपतिर्बलेन पीड़ितः दुश्च्यवनो वृषा समित्सु सासहिरिति। 'तथा ह्यन्यत्रापि सादृश्यात् छन्दोऽभिधायी शब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते। यथा च संवर्गविद्यायां, ते वा एते पञ्च चान्ये पञ्चान्ये दश सम्पद्यन्त इत्यारभ्य, सैषा विराड़न्नादि||रुच्यते॥

इतश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते।

भूतादिपादव्यपदेशोपपत्तेश्चैवम्॥ २७॥

(क) भूतपृथिवीशरीरहृदयानि¶ निर्दिश्य, सैषा चतु-

---

(क) इतश्च गायत्रीवाक्ये ब्रह्मैव प्रतिपाद्यमित्यभ्युपगन्तव्यमिति—'एवं'-

---

* बृह्मणीति भवितुमर्हति।

† गायत्रीति ग-पुस्तके न पठ्यते। पाठोऽयं न समीचीनतया प्रतिभाति।

‡ विश्वा भूतानीति ख०, ग०।

§ चतुष्पदः गायत्र्या इति ख०, ग०।

|| अन्नादीति ग०।

¶ भूतवाक्पृथिवीशरीरहृदयप्राणानिति ख०।

ष्पदेति व्यपदेशो ब्रह्मण्येव गायत्रीशब्दाभिधेय उपपद्यते ॥

**उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २८ ॥**

(क) पूर्ववाक्ये, त्रिपादस्यामृतं दिवीति दिवोऽधिकरणत्वेन निर्देशात्, इह च दिवः पर 'इत्यवधित्वेन निर्देशात्, उपदेशस्य भिन्नरूपत्वेन पूर्ववाक्योक्तं ब्रह्म परस्मिन्न प्रत्यभिज्ञायत 'इति चेत्, न'। 'उभयस्मिन्नप्युपदेशेऽर्थस्वभावैक्येन प्रत्यभिज्ञाया 'अविरोधात्' *। यथा वृक्षाऽग्रे श्येनो वृक्षाग्रात् परतः श्येन इति। तस्मात् परमपुरुष एव निरतिशयतेजस्को, दिवः परो ज्योतिर्दीप्यत इति प्रतिपाद्यते। एतावानस्य महिमा, अतो ज्यायाꣳश्च पूरुषः। पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवीति प्रतिपादितस्य चतुष्पदः परमपुरुषस्य।

वेदाहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसस्तु पारे।

---

शब्दार्थः। 'च'कारोऽवधारणे। कुतः। भूतपृथिवीशरीरहृदयैश्चतुष्पदागायत्रीव्यपदेशस्य ब्रह्मण्येवोपपत्तेः'। यावन्मुख्यमुपपद्यते तावन्न गौणं कल्पनीयम्। अतो ब्रह्मण एव गायत्रीशब्दार्थत्वाभ्युपगतावेव न केवलस्य छन्दसो भूतादयः पादा भवितुमर्हन्ति। किञ्च। ते वा एते पञ्च ब्रह्मपुरुषा इति श्रुतिः पूर्वं ब्रह्मणः प्रकृतत्वे सङ्गच्छते। तस्माद्गायत्रीशब्देोदितं ब्रह्मैवाभ्युपगन्तव्यमिति ज्योतिर्वाक्ये द्युसम्बन्धात् तदेव प्रत्यभिज्ञायत इति ॥२७॥

(क) पुनराशङ्क्य परिहरति। पूर्वस्मिन् वाक्ये, त्रिपादस्यामृतं

---

* परस्मिन्नित्यादिरविरोधादित्यन्तः पाठः ख-पुस्तके लिपिकरप्रमादात् पतित इत्यवगन्तव्यम्।

इत्यत्राभिहिता*प्राकृतरूपस्य तेजोऽप्यप्राकृतमिति तद्वत्तया स एव ज्योतिःशब्दाभिधेय इति निरवद्यम् ॥

निरतिशयदीप्तियुक्तं ज्योतिःशब्दाभिधेयं प्रसिद्धवन्निर्दिष्टं परमपुरुष † एवेत्युक्तम्। इदानीं कारणत्वव्याप्तामृतत्वप्राप्त्युपायतया उपास्यत्वेन श्रुत इन्द्रप्राण‡शब्दाभिधेयोऽपि परमपुरुष एवेत्याह।

## प्राणस्तथानुगमात्॥ २९ ॥

(क) कौषीतकीब्राह्मणे प्रतर्दनविद्यायां, प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च इत्या-

---

दिवीति सप्तम्या द्यौराधारत्वेन निर्दिश्यते। अथ यदतः परो दिवो ज्योतिरित्यत्र पञ्चम्या अवधित्वं प्रतिपाद्यते। तथाच विभक्तिभेदेन 'उपदेशभेदात्' ज्योतिर्वाक्ये प्रत्यभिज्ञा 'न' सम्भवति 'इति चेत्'। 'न'। कुतः। 'उभयस्मिन्नपि' उपदेशे तात्पर्यैक्येन 'अविरोधात्'। विभक्तिभेदेन उपदेशद्वयेऽपि प्रतिज्ञाया अविरोधादित्यर्थः। यथा वृक्षाग्रे श्येनः वृक्षाग्रात् श्येन इति व्यपदिश्यते। अत्र उभयत्रापि दिवः परत्वमेव विवक्षितम्। तस्मात् अमृतज्योतिःशब्दाभिधेयं निरतिशयदीप्तिमत्तरं ब्रह्मैवेति सिद्धम् ॥ २८ ॥

(क) पूर्वस्मिन्नधिकरणे, यदतः पर इत्यत्र यच्छब्दस्य प्रसिद्धार्थवाचकस्य बलात् तत्सहकृतं ब्रह्मलिङ्गं तेजोलिङ्गापेक्षया बलवत्तरमित्युक्तम्।

---

* इत्यभिहितेति ग०।

† पुरुष इति ख०।

‡ प्राणादीति ख०, ग०।

रथ्य वरं वृणीष्वेति वक्तारमिन्द्रं प्रति, त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति प्रतर्दनेनोक्तः, स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्वेति श्रूयते । तत्र संशयः । किमयं हिततमोपासनकर्मतया इन्द्रप्राणशब्दनिर्दिष्टो जीव एव । उत, तदतिरिक्तः परमात्मेति । किं युक्तम् । जीव एवेति । कुतः । इन्द्रशब्दस्य जीवविशेष एव प्रसिद्धेः । तत्समानाधिकरणस्य प्राणशब्दस्यापि तत्रैव वृत्तेः । अयमिन्द्राभिधानो

---

न तथेह किञ्चित् बलवत्त्वसम्पादकमस्तीति प्रत्युदाहरणसङ्गतिरस्याधिकरणस्य । यद्वा, यथा दिवि दिव इत्यत्र प्रधानप्रकृत्यर्थानुरोधात् गुणभूतस्य प्रत्ययार्थोऽन्यथात्वं नीतः, तद्वदिहापि स्वतन्त्रप्राणादिपदार्थभेदप्रतीतौ तत्सापेक्षब्रह्मरूपैकवाक्यार्थप्रतीतिगुणभूतायाः अपलापो युक्त इति दृष्टान्तसङ्गतिः । पदार्थप्रतीतेः स्वातन्त्र्यं जनकत्वेन, वाक्यार्थप्रतीतेर्गुणत्वं तज्जन्यत्वेनेति बोध्यम् । कौषितकीब्राह्मणे श्रूयते । प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम, युद्धेन च पौरुषेण चेत्यारभ्य तत्र वरं ते ददामीतीन्द्रेणोक्ते प्रतर्दनस्त्वं प्रतीक्ष्मेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इत्युवाच । (तं वरं त्वमेवालोच्य मे मह्यं वृणीष्व देहीत्यर्थः ।) एवं प्रतर्दनेनोक्त इन्द्र इदमाह—प्राणोऽस्मि प्रज्ञात्मा, तं मामायुरमृतमुपास्स्वेति । उत्तरत्रापि, अथ खलु प्राण एव प्रज्ञात्मा, इदं शरीरं परिगृह्योत्थापयतीति, न वाचं विजिज्ञासीत वक्तारं विद्यादिति च । अन्ते च, स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृत इति । अत्र हिततमोपासनाविधिविषयत्वेन इन्द्रप्राणशब्दवाच्यः किं जीवः । उत, परमात्मेति संशयः । जीव इति पूर्वपक्षः । कुतः । इन्द्रशब्दस्य तत्रैव प्रसिद्धेरिन्द्रशब्दसहचरितप्राणशब्दस्यापि स एवार्थ इति, तं मामायुरमृत-

हि * जीवः प्रतर्दनेन त्वमेव वरं वृणीष्व यं त्वं मनुष्याय † हिततमं मन्यस इत्युक्तः, मामुपास्वेति स्वात्मोपासनं हिततममुपदिदेश । हिततमत्वञ्चामृतत्वप्राप्त्युपाय एव । जगत्कारणोपासनस्यैवामृतत्वप्राप्त्युपायतया ‡, तस्य तावदेव चिरं यावन्न विमोक्ष्ये । अथ सम्पत्स्य § इत्यवगतम् । अतः प्रसिद्ध जीवभाव¶ इन्द्र एव कारणं ब्रह्मेत्याशङ्कायामभिधीयते—

मित्युपास्वेति तस्यैवोपास्यत्वोपदेशात् । राद्धान्तस्तु । इन्द्रप्राणशब्दनिर्दिष्टं जीवादर्थान्तरभूतं परं ब्रह्म, स एव प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृत इतीन्द्रप्राणशब्दनिर्दिष्टस्यैव जीवेष्वसम्भावितानामानन्दत्वाजरत्वामृतत्वानां श्रवणात् ॥ १ । १ । कं २९ ॥

इति श्रीरामनाथकृतौ न्यायप्रदीपे प्रथमाध्यायस्य
प्रथमः पादः ॥

(सूत्रार्थस्तु ।) प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्वेत्यादीन्द्रप्राणशब्दनिर्दिष्टः परमात्मैव । कुतः । 'तथानुगमात्' । एष 'प्राण' एव प्रज्ञात्मानन्दोऽजरोऽमृत इति हिततमत्वप्रज्ञात्मत्वानन्दत्वाजरत्वादीनां हि 'तथा' परमात्मपरिग्रहे सत्येवानुगन्तुं शक्यत्वात् । किञ्च । इन्द्रो राजा जगतो य ईश इत्यादिषु तस्य परमैश्वर्यवत्त्वश्रवणेऽपि तच्चेन्द्रशब्द ईश्वरविषयः प्रकरणादवगम्यते ॥ २९ ॥

* हीति ग-पुस्तके नोपलभ्यते ।

† मनुष्यायेति न पठ्यते ख-पुस्तके ।

‡ प्राप्तिहेतुत्वमिति ग० ।

§ सम्पत्स्यत इति ग० ।

¶ भावादिति ख० । पाठोऽयं नात्यन्तं रोचते ।

'प्राणस्तथानुगमा'दिति। अयमिन्द्रप्राणशब्दनिर्दिष्टो न जीवमात्रम्। अपि तु जीवादर्थान्तरभूतं परं ब्रह्म। स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत इतीन्द्रप्राणशब्दाभ्यां प्रस्तुतस्यानन्दाजरामृतशब्दसामानाधिकरण्येनानुगमो हि तथा सत्येवो*पपद्यते॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्॥ ३०॥

(क) यदुक्तम्—इन्द्रप्राणशब्दनिर्दिष्टस्यानन्दोऽजरोऽमृत इत्यनेनैकार्थ्यादयं परं ब्रह्मेति। तन्न उपपद्यते। मामेव विजानीहि, प्राणोऽस्मि, प्रज्ञात्मा, तं † मामायुरमृतमित्युपास्स्वेति 'वक्ता ह्यैन्द्रस्त्रिशीर्षाणं त्वाष्ट्रमहनं‡मित्येवमादिना त्वाष्ट्रवधादिभिः

(क) ननु यदुक्तं प्राणो ब्रह्मेति, तदयुक्तमिति 'नञर्थः। कुतः। 'वक्तुरात्मोपदेशात्'। उपक्रमे, मामेव विजानीहि त्रिशीर्षाणं त्वाष्ट्रमहनम्—इत्यादिना प्रज्ञातजीवभावस्य 'वक्तुरिन्द्रस्य स्वात्मन उपास्यत्वोपदेशात्। अत उपसंहारस्तदनुगुणो नेतव्य 'इति चेत्'। परिहरति। 'हि' यस्मात् 'अस्मिन्' प्रकरणे उपक्रमादारभ्य 'अध्यात्मसम्बन्धस्य 'भूमा' बाहुल्यमुपलभ्यत इत्यर्थः। आत्मन्याधेयतया सम्बध्यमानानां तदसाधारणधर्माणां तथा चिदचितोश्च बहुत्वेन सम्बन्धबहुत्वस्य वक्तुः परमात्मत्वे सत्येव सम्भवात्। तथाहि उपक्रमे तावत्, यं त्वं मनुष्याय हिततमं

* सति चेति ख०।

† त्वमिति ख०।

‡ अरुन्मुखान्यतीन् शालावृकेभ्यः प्रायच्छमित्यधिकं ख-पुस्तके पठ्यते।

प्रज्ञात*जीवभावस्य स्वात्मन एवोपास्यतां † प्रतर्दनायोपदिशति। अतः, उपक्रमे जीवविशेष इत्येव गम्यते। सत्यानन्दोऽजरोऽमृत इत्यादिभिरुपसंहारस्तदनुगुण एव वर्णनीय 'इति चेत्'। परिहरति—'अध्यात्मसम्बन्धभूमा ह्यस्मिन्' आत्मनि यः सम्बन्धः तस्य भूमा भूयस्त्वं बहुत्वमित्यर्थः। आत्मन्याधेयतया सम्बध्यमानानां ‡ बहुत्वेन सम्बन्धबहुत्वं, तच्चास्मिन् वक्तरि परमात्मन्येव हि सम्भवति। तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः, स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत इति भूतमात्राशब्देनाचेतन§वस्तुजातमभिधाय प्रज्ञामात्राशब्देन तदाधारतया चेतनवर्गञ्चाभिधाय तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य तमेवा-

---

मन्यस इति हिततमोपासनं प्रारब्धम्। तत् तावत् परमात्मोपासनमेव। तस्यैव मोक्षसाधनस्य हिततमत्वात्। मध्ये च, एष ह्येव साधु कर्म कारयतीत्यादिना सर्वकर्मकारयितृत्वं श्रूयते। तथा, तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिता इति श्रूयमाणं सर्वाधारत्वं परमात्मन एव धर्मः। अत इन्द्रप्राणशब्दनिर्दिष्टः परमात्मैव उपास्य इत्यर्थः॥ ३०॥

---

* प्रज्ञातेति नोपलभ्यते ख-पुस्तके।

† उपास्यत्वमिति ग०।

‡ सम्बध्यमानानामिति ख०, ग०। न समीचीनमेतत्।

§ अचेतनेति न पठ्यते ख-पुस्तके।

नन्दोऽजरोऽमृत इत्युपदिशति। तदेतच्चेतनाचेतनात्मककृत्स्न-वस्त्वाधारत्वं जीवादर्थान्तरभूते तस्मिन् परमात्मन्येवोपपद्यत इत्यर्थः॥

अथवा, 'अध्यात्मसम्बन्धभूमा ह्यस्मिन्' परमात्मासाधारणधर्मसम्बन्धो*ऽध्यात्मसम्बन्धः, तस्य भूमा बहुत्वमस्मिन् प्रकरणे विद्यते। तथा हि, प्रथमं त्वमेव वरं वृणीष्व, यं त्वं मनुष्याय हिततमं मन्यस इति मामुपास्स्वेति च परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं प्राणशब्दनिर्दिष्टस्येन्द्रस्य प्रतीयते। तथा, एष एव साधु कर्म कारयति, तं यमेभ्यो लोकेभ्य उन्निनीषति, एष एवासाधु कर्म कारयति, तं यमध उन्निनीषतीति सर्वस्य कर्मणः कारयितृत्वञ्च परमात्मधर्मः। तथा, तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिता इति सर्वाधारत्वञ्च तस्यैव धर्मः। तथा, स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत इत्येतेऽपि परमात्मन एव धर्माः। एष लोकाधिपतिरेष सर्वेश इति च परमात्मन्येव सम्भवति। तदेवमध्यात्मसम्बन्धभूम्नोऽत्र विद्यमानत्वात् परमात्मैवात्रेन्द्रप्राणशब्दनिर्दिष्टः॥

कथं तर्हि प्रज्ञातजीवभावस्येन्द्रस्य स्वात्मन उपास्यत्वोपदेशः संगच्छत इत्यत्राह।

---

* अध्यात्मसम्बन्धभूमेत्यादिर्धर्मसम्बन्ध इत्यन्तः पाठः ख-पुस्तके लिपिकरप्रमादात् पतित इत्यवधेयम्।

† जीवस्येति ख०।

शास्त्रदृष्ट्या तूपदेशो वामदेववत्॥ २१॥

(क) प्रज्ञातजीवभावेनेन्द्रेण, मामेव विजानीहि* मामुपास्स्वेति उपास्यब्रह्मणः स्वात्मत्वेनोपदेशोऽयं न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः। अपि तु 'शास्त्रेण स्वात्मदृष्टिकृतः। एतदुक्तं भवति। अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि, ऐतदात्म्यमिदं सर्वम्, अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा, य आत्मनि तिष्ठन्नात्मनोऽन्तरो, यमात्मा न वेद, यस्यात्मा शरीरं, य आत्मानमन्तरो यमयति, एष † सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायण इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य जीवात्मवाचिनामहंत्वमादिशब्दानां परमात्मन्येव पर्यवसानं ज्ञात्वा, मामेव विजानीहि, मामुपास्स्वेति स्वात्मशरीरकं‡ परमात्मानमेवोपास्यत्वेनोपदिशति—'वामदेववत्'। यथा वामदेवः परस्य ब्रह्मणः सर्वा-

(क) कथमिन्द्रो जीवत्वादनुपास्योऽपि मामुपास्स्वेत्युपदिष्टवानित्यत आह—शास्त्रेति। ऐतदात्म्यमिदं सर्वं स आत्मा, एष त आत्मान्तर्याम्यमृत इत्यादि—'शास्त्रदृष्ट्या' स्वान्तर्यामिणः परब्रह्मणः सर्वान्तर्यामित्वेन सर्वात्मकत्वमवगम्य, मामेव विजानीहीतीन्द्रस्य स्वात्मत्वेन परमात्मोपदेशोऽयम्। तत्र दृष्टान्तः, 'वामदेववदिति। यथा वामदेवः शास्त्रदृष्ट्या स्वात्मशरीरकं परमात्मानं पश्यन्, अहं मनुरभवं सूर्य्यश्चेत्याह। तद्वदित्यर्थः॥ २१॥

* जानीहीति ग०।

† एष—इत्यस्मात् प्राक्, स त आत्मान्तर्याम्यमृतः, य आत्मनि सञ्चरन् यस्यात्मा शरीरं यमात्मा न वेदेति ख-गपुस्तकयोरधिकं पठ्यते।

‡ शरीरमिति ग०।

न्तरात्मत्वं सर्वस्य तच्छरीरत्वं शरीरवाचिनां शब्दानां शरीरिणि पर्यवसानं पश्यन्नहमिति स्वात्मशरीरकं * परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन् व्यपदिशति। तद्वैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्यश्च, अहं कक्षीवान् † ऋषिरस्मि विप्र इत्यादि ‡। यथा च प्रह्लादः,

सर्वगत्वादनन्तस्य स एवाहमवस्थितः।
मत्तः सर्वमहं सर्वं मयि सर्वं सनातने॥

इत्यादिवद्§िति॥

अस्मिन् प्रकरणे जीववाचिभिः शब्दैरचिद्विशेषाभिधायिभिश्चोपास्यभूतस्य ¶ ब्रह्मणोऽभिधाने कारणञ्चोद्यपूर्वकमाह।

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह च तद्योगात्॥ ३२॥

(क) न वाचं|| विजिज्ञासीत वक्तारं विद्यात्, त्रिशीर्षाणन्त्वाष्ट्रमहनं, अरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छमि-

(क) यदुक्तम्, अध्यात्मसम्बन्धबाहुल्यात् न देवतात्मा प्राण इति। तत् सत्यम्। तथापि न ब्रह्मपरमेवेदं वाक्यं, किन्तु जीवमुख्यप्राणपरमपि।

* शरीरमिति ग०।

† कक्षीवानिति ख-पुस्तके नोपलभ्यते।

‡ यदा वामदेव इति प्रसिद्धो रुद्रः सोऽब्रवीत्। अहमेकः प्रथममास, वर्तामि च भविष्यामि च। नान्यः कश्चिन्मत्तो व्यतिरिक्त इत्यादिवदित्यधिकं ख-ग-पुस्तकयोर्दृश्यते।

§ इत्यादिवच्चेति ग०।

¶ भूतेति क०। भूतस्य परस्येति ग०।

|| वाच्यमिति क०। पाठोऽयं न साम्प्रदायिकः।

त्यादि 'जीवलिङ्गात्, यावदस्मिन्* शरीरे प्राणो वसति ताव-दायुः। अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापय-यतीति† 'मुख्यप्राणलिङ्गाच्च' 'नाध्यात्मसम्बन्धभूमेति चेत्, न'। 'उपासात्रैविध्यादितो: ‡, उपासनात्रैविध्यमुपदेष्टुं तत्तच्छब्दे-नाभिधानम्—निखिलकारणभूतब्रह्मणः स्वरूपेणानुसन्धानं भोक्तृवर्गशरीरकत्वानुसन्धानं भोग्यभोगोपकरणशरीरकत्वेनानुस-न्धानञ्चेति त्रिविधमनुसन्धानमुपदेष्टुमित्यर्थः। तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेऽप्याश्रितम्। सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दो § ब्रह्मेत्यादिषु स्वरूपानुसन्धानम्। तत् सृष्ट्वा तदे-वानुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाभवत्, निरुक्तञ्चानिरुक्तञ्च, निलयनञ्चानिलयनञ्च, विज्ञानञ्चाविज्ञानञ्च, सत्यञ्चानृतञ्च सत्य-

---

कुतः। 'जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च। न वाचं विजिज्ञासीत, वक्तारं विद्यादिति जीवलिङ्गं, वागादिकरणैर्व्याप्टतस्य वक्तुर्जीवस्य विज्ञेयत्वमुप-लभ्यते। एवं प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीति प्राण-लिङ्गं, देहधारणस्य प्राणलिङ्गत्वात्—'इति चेत्'। 'न'। 'उपासात्रै-विध्यात्'। उपासनायास्त्रिविधत्वमुपदेष्टुं ब्रह्मण एव तत्तच्छब्देनाभि-धानात्। यथा खल्वन्यत्र त्रिविधोपासनं ब्रह्मण आश्रीयते। तत्र, सत्यं ज्ञानमनन्तं ब्रह्मेति स्वरूपेण ब्रह्मण उपास्यत्वम्। तत् सृष्ट्वा तदेवानुप्रावि-शत्, तदनुप्रविश्य सच्च त्यच्चाभवदित्यादिषु जीववर्गान्तर्यामितया प्राणाद्यन्त-

---

* यस्मिन्निति ख०।

† उत्थाप यातीति ग०।

‡ उपासेत्यादिपाठः ख-पुस्तके पतित इति प्रतिभाति।

§ आनन्द इत्यत्र विज्ञानमानन्दमिति ख०।

मभवदित्यादिषु भोक्तृशरीरतया भोग्यभोगोपकरणशरीरतया चानुसन्धानम्। इहापि प्रकरणे त्रिविधमनुसन्धानं युज्यत एवेत्यर्थः। एतदुक्तं भवति। यत्र हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचेतनविशेषाणाञ्च परमात्मासाधारणधर्मयोगस्तदभिधायिनां शब्दानां परमात्मवाचिशब्दसामानाधिकरण्यं वा दृश्यते। तत्र परमात्मनस्तत्तच्चिदचिद्विशेषान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितमिति। अतो*ऽत्र इन्द्रप्राणशब्दनिर्दिष्टो जीवादर्थान्तरभूतः परमात्मैवे†ति सिद्धम्॥

इति श्रीभगवद्रामानुजाचार्यविरचिते‡ शारीरकमीमांसाभाष्ये प्रथमाध्यायस्य प्रथमः पादः।

---

र्यामितया च तस्योपास्यत्वम्। एवमिहाप्र तर्दनविद्यायामपि 'तद्योगात्' तस्य त्रैविध्यस्य सम्भवात्। अत इन्द्रप्राणनिर्दिष्टः परमात्मैवेति सिद्धम्॥ ३२॥

इति श्रीरामनाथकृतौ श्रीभाष्यसारसङ्ग्रहे ब्रह्मसूत्रवृत्तौ प्रथमाध्यायस्य प्रथमः पादः॥

---

* अथेति क०।

† परमात्मेति ग०।

‡ श्रीमद्रामानुजविरचिते इति ख०। रामानुजाचार्योभयवेदान्ताचार्यविरचित-इति ग०।

## द्वितीयः पादः ।



प्रथमे पादे, अधीतवेदः पुरुषः कर्ममीमांसाश्रवणाधिगतकर्मयाथात्म्यविज्ञानः केवलकर्मणामल्पास्थिरफलत्व*मवगम्य वेदान्तवाक्येषु च आपातप्रतीतानन्तस्थिरफलब्रह्मस्वरूपतदुपासनसमुपजनितपरमपुरुषार्थलक्षणमोक्षापेक्षोऽवधारित†परिनिष्पन्नवस्तुबोधनशब्दशक्तिर्वेदान्तवाक्यानां परस्मिन् ‡ ब्रह्मणि निश्चितप्रमाणभावः तदितिकर्त्तव्यतारूपशारीरकमीमांसाश्रवणमारभेतेत्युक्तम्। शास्त्रारम्भसिद्धये अनन्तविचित्रस्थिरत्रसरूप§भोक्तृभोग्य¶भोगोपकरणभोगस्थानलक्षणनिखिलजगदुदयविभवलयमहानन्दैक‖कारणं परं ब्रह्म, यतो वा इमानीत्यादि वाक्यं बोधयतीति च प्रत्यपादि। जगदेककारणं परं ब्रह्म सकलेतरप्रमाणाविषयतया शास्त्रैकप्रमाणकमित्यभ्यधाम। शास्त्रैक**प्रमाणकत्वञ्च ब्रह्मणः प्रवृत्तिनिवृत्त्यन्वयविरहेऽपि स्वरूपे-

---

* अस्थिरचरत्वमिति ग० ।

† मोक्षावधारितेति ख० । मोक्षापेक्षावधारितेति ग० । उभयत्रापि पाठभेदः न समीचीनतया प्रतिभाति ।

‡ परस्मिन्नित्यत्र यस्मिन्निति ग० ।

§ रूपभक्तीति ग० ।

¶ भोग्येति क-पुस्तके न पठ्यते ।

‖ उदयलयप्रहाणादेकेति ख० ।

** शास्त्रप्रमाणकत्वञ्चेति ख०, ग० ।

ण्यैव परमपुरुषार्थभूते परस्मिन् ब्रह्मणि वेदान्तवाक्यानां समन्वयाभिरुध्यत* इत्यब्रूम†। निखिलजगदेककारणतया वेदान्तवेद्यं ब्रह्म च ईक्षणाद्यन्वयादानुमानिकप्रधानादर्थान्तरभूतश्चेतनविशेष‡ एवेत्युपापिपादाम§। स च स्वाभाविकानवधिकातिशयानन्दविपश्चित्त्वनिखिलचेतनभयाभयहेतुत्वसत्यसंकल्पत्वसमस्तचेतनाचेतनान्तरात्मत्वादिभिर्बद्धमुक्तोभयावस्थाज्जीवशब्दाभिलपनीयाच्चार्थान्तर इति च समादधीमहि। स चाप्राकृताकर्मनिमित्तस्वासाधारणदिव्यरूप इत्युदैरिराम। आकाशप्राणाद्यचेतनविशेषाभिधायिभिर्जगत्कारणतया प्रसिद्धवन्निर्दिश्यमानः सकलेतरचेतनाचेतनविलक्षणः स एवेति समगरिष्महि¶। परतत्त्वासाधारणनिरतिशयदीप्तियुक्तज्योतिःशब्दाभिधेयो द्युसम्बन्धितया प्रत्यभिज्ञानात्‖ स एवेत्यातिष्ठामहि। परमकारणासाधारणामृतत्वप्राप्तिहेतुभूतः परमपुरुष एव शास्त्रदृष्ट्या इन्द्रादिशब्दैरभिधीयत इत्यब्रूमहि॥

तदेवमतिपतितसकलेतरप्रमाणसम्भावना**भूमिः सार्वज्ञ्यसत्यसंकल्पत्वाद्यपरिमितोदारगुणसागरतया स्वेतरसमस्तवस्तु-

---

* निरुध्यत इति ख०। इति अपपाठोऽयम्।

† ब्रूम इति ख०।

‡ भूतश्चेतनविशेष इति ख०, ग०।

§ उपापिपादामेति सर्वेष्वेवादर्शपुस्तकेषु उपलभ्यते। उपापीपदामेति भवितुमर्हति।

¶ समगरिष्महे इति ग०।

‖ प्रत्यभिधानादिति क०।

** सम्भवनानाभूमीति ख०। अयुक्तमेतत्।

विलक्षणः परं ब्रह्म पुरुषोत्तमो नारायण एव वेदान्तवेद्य इत्युक्तम् ॥

अतः परं द्वितीयतृतीयचतुर्थेषु पादेषु यद्यपि वेदान्तवेद्यं ब्रह्मैव, तथापि कानिचित् वेदान्तवाक्यानि प्रधानचेत्रज्ञान्तर्भूतवस्तुविशेषस्वरूपप्रतिपादनपराणीवेत्याशङ्क्य तन्निरसनमुखेन तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यते । तत्रास्पष्टजीवलिङ्गकानि वाक्यानि द्वितीये पादे* विचार्यन्ते । स्पष्टजीवलिङ्गकानि तृतीये । तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थे ॥

## सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

(क) इदमाम्नायते छान्दोग्ये,—अथ † खलु क्रतुमयोऽयं पुरुषो, यथा क्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य

(क) छान्दोग्यस्य तृतीयाध्याये शाण्डिल्यविद्यायामिदमाम्नायते । सर्वं खल्विदं ब्रह्म, तज्जलानिति शान्त उपासीत । अथ खलु क्रतुमयोऽयं पुरुषः, यथा क्रतुरस्मिंल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति, स क्रतुं कुर्वीत, मनोमयः प्राणशरीरो भारूप इति । अत्र मनोमयत्वादिगुणकः क्षेत्रज्ञ उपास्यत्वेन उपदिश्यते ; उत परं ब्रह्मेति संशयः । क्षेत्रज्ञ इति पूर्वपक्षः । कुतः । तस्यैव मनःप्राणोपकरणकत्वात् । मनोमयत्वप्राणशरीरकत्वादिकं संसारिलक्षणं न ब्रह्मलिङ्गम् । अप्राणो ह्यमनाः शुभ्र इत्यादि श्रुतेः । अत्र राद्धान्तः । मनोमयत्वादिगुणकः परमात्मैवात्र उपास्यः । मनोमयः प्राणशरीरनेता, स एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमय इत्यादिषु तस्मिन्नेव प्रसिद्धानां मनोमयत्वादीनामुपदेशात् ।

* पादे—इति नोपलभ्यते ग-पुस्तके ।

† अथेत्यस्मात् पूर्वं, सर्वं खल्विदं ब्रह्म, तज्जलानुपासीतेत्यधिकं क-पुस्तके पठ्यते ।

भवति, स क्रतुं कुर्वीत, मनोमयः प्राणशरीरो भारूप इत्यादि। अत्र स क्रतुं कुर्वीतेति प्रतिपादितस्य उपासनस्य * उपास्यो मनोमयः प्राणशरीर इति निर्दिश्यत इति प्रतीयते। अत्र संशयः। किं मनोमयत्वादिगुणकः क्षेत्रज्ञः, उत परमात्मेति। किं युक्तं, क्षेत्रज्ञ इति। कुतः। मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात्। परमात्मनस्तु, अप्राणो ह्यमना † इति तत्प्रतिषेधाच्च।

---

तत्र मनोमयत्वं विशुद्धमनोग्राह्यत्वं, प्राणशरीरत्वं प्राणस्याप्याधारत्वं नियन्तृत्वञ्च। अपि च, अप्राणः प्राणानधीनस्थितिः, अमना मनोऽनधीनज्ञान इत्यर्थः। अथवा, सर्वं खल्विदं ब्रह्मेति सर्वात्मकत्वेन निर्दिष्टं ब्रह्म किं क्षेत्रज्ञः, उत परमात्मेति संशयः। क्षेत्रज्ञ इति पूर्वपक्षः। कुतः। अनाद्यविद्यामूलकर्मनिमित्तकब्रह्मादिस्तम्बपर्यन्तसर्वभावस्तस्यैवोपपद्यते। परब्रह्मणस्तु सकलहेयप्रत्यनीककल्याणैकतानस्य समस्तहेयाकारसर्वतादात्म्यं विरोधादेव न सम्भवति। ब्रह्मशब्दोऽपि बृहत्त्वगुणयोगेन, तस्मादेतत् ब्रह्मनामरूपमन्नञ्च जायते इति तत्रैव वर्तते। जगज्जन्मादेश्च कर्मनिमित्तत्वात् तद्धेतुत्वनिर्देशोऽपि तत्रोपपद्यते। राद्धान्तस्तु। तज्जलानिति सर्वं खल्विदं ब्रह्मेति जगज्जन्मादिहेतुकत्वं तदात्मकत्वं निर्दिश्यमानं परस्यैव ब्रह्मण उपपद्यते। सोऽकामयत बहु स्यां प्रजायेयेति, इदं सर्वमसृजतेत्यादिषु तस्यैव जगद्धेतुत्वप्रसिद्धेः। तथा, सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा, ऐतदात्म्यमिदं सर्वमिति हेयप्रत्यनीककल्याणैकतानात्मनश्च परस्य ब्रह्मणः हेयाकारसर्वतादात्म्यमविरुद्धम्। यः पृथिव्यां तिष्ठन्, यस्य पृथिवी शरीरं, य आत्मनि तिष्ठन्, यस्यात्मा शरीरं, स त आत्मान्तर्याम्य-

---

* भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर इत्यादि तस्योपासनस्येति ख०।

† अमनाः शुभ इति ख०।

नच सर्वं खल्विदं ब्रह्मेति पूर्वनिर्दिष्टं ब्रह्मा*वोपास्यतया संबद्धुं शक्यते। शान्त उपासीतेत्युपासनोपकरणशान्तिनिवृत्त्यु-पायभूतब्रह्मात्मकत्वोपदेशार्थोपात्तत्वात्। नच, स क्रतुं कुर्वीतेत्युपासनस्योपास्याकाङ्क्षत्वात्‡ वाक्यान्तरस्थमपि ब्रह्म सम्बध्यत इति शक्यं वक्तुं, स्ववाक्योपात्तेन मनोमयत्वादिगुणकेन निरा-

---

ह्त इत्यादिना शरीरात्मभावेन सर्वात्मत्वोपपादनात्। सर्वं खल्विदं ब्रह्मेति सामानाधिकरण्यनिर्देशश्च सर्व-शब्दस्य सर्वशरीरके ब्रह्मण्येव प्रवृत्तिरुप-पद्यते। शरीरिवाचिशब्दः शरीरिण्यात्मन्येव पर्यवस्यति देवमनुष्यादि-शब्दवत्। १ अ०। २ पा०। १ अ०॥

(सूत्रार्थस्तु) अथ कानिचिदस्पष्टजीवलिङ्गकानि कानिचित् स्पष्ट-जीवलिङ्गकानि च यानि वाक्यानि, तानि सर्वाण्यपि ब्रह्मपराण्येवेति निर्णेतुं द्वितीयतृतीयपादौ आरभ्येते। सर्वत्र प्रसिद्धोपदेशात्॥ सर्वात्मत्वेन जगज्जन्मादिहेतुत्वेन च निर्दिष्टः ब्रह्म-शब्दवाच्यः परमात्मैव। कुतः। 'प्रसिद्धोपदेशात्'। तज्जलानिति, सर्वं खल्विदं ब्रह्मेति प्रसिद्धवत् तस्योपदेशात्। प्रसिद्धं हि हेतुतया व्यपदिश्यते। 'सर्वत्र' वेदान्तेषु ब्रह्मैव जगन्निलयजीवनहेतुतया प्रसिद्धम्—यतो वा इमानीत्यादिषु। सोऽकामयत बहु स्यां प्रजायेयेत्यादिषु सर्वान्तर्यामितया सर्वात्मत्वमपि परब्रह्मण एव उपपद्यते। न प्रतिशरीरं भिन्नानां जीवानाम्। अतः परमात्मैवात्र ब्रह्म-शब्दवाच्यः॥ १॥

---

* ब्रह्मोपास्यतयेति ग०।

† निवृत्त्युपायेति ख०। पाठोऽयं समीचीनतया न प्रतिभाति।

‡ उपास्यसाकाङ्क्षत्वादिति ख०।

काङ्क्षत्वात्। मनोमयः प्राणशरीर इत्यनन्यार्थतया * निर्दिष्टस्य विभक्तिविपरिणाममात्रेणोभयाकाङ्क्षानिवृत्तिसिद्धेः॥

एवं निश्चिते जीवत्वे, एतद्†ब्रह्मेत्युपसंहारस्थं ब्रह्म-पद‡मपि जीव एव पूजार्थं प्रयुक्तमित्यध्यवसीयत इत्येवं प्राप्ते ब्रूमः। 'सर्वत्र प्रसिद्धोपदेशात्'। मनोमयत्वादिगुणकः परमात्मैव। कुतः। 'सर्वत्र' वेदान्तवाक्येषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरुपदेशात्। प्रसिद्धं हि मनोमयत्वादि ब्रह्मणः। यथा, मनोमयः प्राणशरीरनेता¶ स य एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमयः, अमृतो हिरण्मयहृदा मनीषा मनसाभिक्लृप्तो, य एवं विदुरमृतास्ते भवन्ति। न चक्षुषा गृह्यते नापि वाचा मनसा तु विशुद्धेन। तथा प्राणस्य प्राणः। अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति§। सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते इत्यादिषु मनोमयत्वं विशुद्धेन मनसा ग्राह्यत्वं, प्राणशरीरत्वं प्राणस्याप्याधारत्वं नियन्तृत्वञ्च। एवं‖ सति, एष आत्मान्तर्हृदय एतद्ब्रह्मेति ब्रह्म-शब्दोऽपि मुख्य एव भवति। अप्राणो ह्यमना इति मनआयत्तं ज्ञानं प्राणायत्तां स्थितिञ्च ब्रह्मणो निषेधति। अथवा सर्वं खल्विदं ब्रह्म, तज्जलानिति

---

* इत्यस्यार्थतयेति ग॰। अयुक्तोऽयं पाठः।

† तद्ब्रह्मेति ग॰।

‡ उपसंहारस्थब्रह्मपदमपीति ख॰, ग॰।

¶ प्राणशरीरनियन्तेति ख॰।

§ उत्थाप्य यातीति ख॰।

‖ एवञ्चेति ग॰।

शान्त उपासीतेत्ये*वोपासनं विधीयते, सर्वात्मकं ब्रह्म शान्तः सन्नुपासीतेति। स क्रतुं कुर्वीतेति तस्यैव गुणोपादानार्थोऽनुवादः†। उपादेयाश्च गुणा मनोमयत्वादयः। अतः सर्वात्मकं ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थः। तत्र‡ सन्देहः। किमिह ब्रह्म-शब्देन प्रत्यगात्मा निर्दिश्यते। उत, परमात्मेति। किं युक्तम्। प्रत्यगात्मेति। कुतः। तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः। सर्व-शब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत्। ब्रह्मादिभावश्च प्रत्यगात्मनोऽनाद्यविद्यामूलकर्मविशेषोपाधिको विद्यत एव। परस्य तु ब्रह्मणः सर्वज्ञस्य सर्वशक्तेरपहतपाप्मनो निरस्तसमस्ताविद्यादिदोषगन्धस्य समस्तहेयाकरसर्वभावो¶ नोपपद्यते। प्रत्यगात्मन्यपि क्वचित् क्वचिद्ब्रह्म-शब्दः प्रयुज्यते। अत एव, परमात्मा परं ब्रह्मेति परमेश्वरस्य क्वचित् सविशेषणो निर्देशः। प्रत्यगात्मनश्च निर्मुक्तोपाधेर्ब्रह्मत्वञ्च§ विद्यते। स चानन्त्याय कल्पत इति श्रुतेः। अविदुषस्तस्यैव कर्मनिमित्तत्वाज्जन्म‖स्थितिलयानां तज्जलानितीति हेतुनिर्देशोऽप्युपपद्यते**। तदयमर्थः। अयं

---

* इत्यत्रैवेति ग०।

† गुणोपादानार्थानुवाद इति ख०।

‡ अत्रेति ख०।

¶ समस्तहेयाकारः सर्वभाव इति क०। अयुक्तोऽयं पाठः।

§ ब्रह्मत्वञ्चेति ख०।

‖ जगज्जन्मेति ख०।

** स चेत्यादिरुपपद्यत—इत्यन्तः सन्दर्भः ग-पुस्तके लिपिकरप्रमादात् पतित इत्यवगन्तव्यम्।

जीवात्मा स्वतोऽपरिच्छिन्नरूपत्वेन ब्रह्मभूतः* सन्ननाद्यविद्यया देवतिर्यङ्मनुष्यस्थावरात्मनावतिष्ठत इति ॥

अत्र प्रतिविधीयते। 'सर्वत्र प्रसिद्धोपदेशात्'। सर्वं† खल्विदं ब्रह्मेति निर्दिष्टे सर्वस्मिन् जगति ब्रह्म-शब्देन तदात्मतयाभिधीयमानं‡ परं ब्रह्मैव। न प्रत्यगात्मा। कुतः। 'प्रसिद्धोपदेशात्'। तज्जलानितीति हेतुतः सर्वं खल्विदं ब्रह्मेति प्रसिद्धवन्निर्देशात्¶। ब्रह्मणो जातत्वात् ब्रह्मणि लीनत्वात्§ ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं सर्वं खल्विदं जगदित्युक्ते, यस्माज्जगज्जन्मस्थितिलयाः वेदान्तेषु प्रसिद्धाः, तदेवात्र ब्रह्मेति प्रतीयते। तच्च परमेव ब्रह्म। तथा हि, यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति प्रक्रम्य||, आनन्दो ब्रह्मेति व्यजानात्, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त इत्यादिना पूर्वानुवाकेन प्रतिपादिता**नवधिकातिशयानन्दयोगिनो विपश्चितः परस्माद्ब्रह्मण एव जगदुत्पत्तिस्थितिलया निर्दिश्यन्ते। तथा,—

---

* ब्रह्मस्वरूप इति ख०।

† सर्वतः सर्वमिति ख०।

‡ विधीयमानमिति ग०। पाठोऽयं नात्यन्तं रोचते।

¶ प्रसिद्धवदुपदेशादिति ग०।

§ प्रलीनत्वादिति ख०, ग०।

|| उपक्रम्येति ग०।

** पूर्वानुवाकप्रतिपादितेति ग०।

स कारणं करणाधिपाधिपो
नचास्य कश्चिज्जनिता नचाधिपः ।

इति करणाधिपस्य जीवस्याधिपः परं ब्रह्मैव कारणं व्यपदिश्यते। एवं हि * 'सर्वत्र' परस्यैव ब्रह्मणः कारणत्वं प्रसिद्धम्। अतः परब्रह्मणो जातत्वात् तस्मिन् लीनत्वात् † तेन प्राणनात् तदात्मकतया तादात्म्यमुपपन्नम्। अतः, सर्वप्रकारं सर्वशरीरं सर्वात्मभूतं परं ब्रह्म शान्तो भूत्वा उपासीतेति श्रुतिरेव परब्रह्मणः सर्वात्मकत्वमुपपाद्य तस्योपासनमुपदिशति। परं ब्रह्म हि कारणावस्थं कार्यावस्थं सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतया सर्वात्मभूतम् ‡। एवम्भूततादात्म्यस्य प्रतिपादने¶ परस्य ब्रह्मणः सकलहेयप्रत्यनीककल्याणगुणाकरत्वं न विरुध्यते। प्रकारभूतशरीरगतानां दोषाणां प्रकारिण्यात्मन्यप्रसङ्गात्। प्रत्युत, निरतिशयैश्वर्यापादनेन गुणायैव भवतीति § पूर्वमेवोक्तम्॥

यदुक्तं, जीवस्य सर्वतादात्म्यमुपपद्यत इति। तदसत्। जीवानां प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासम्भवात्। मुक्तस्यानवच्छिन्नस्वरूपस्यापि|| जगत्तादात्म्यं जगज्जन्मस्थिति-प्रलय**कारणत्वनिमित्तञ्च न सम्भवतीति 'जगद्व्यापारवर्ज-

* हीति ग-पुस्तके नोपलभ्यते।

† तस्मिन् प्रलीनत्वादिति ग०।

‡ सर्वदा सर्वात्मभूतमिति ख०।

¶ एवम्भूततादात्म्यप्रतिपादन इति ग०।

§ गुणा एव भवन्तीति ख०, ग०। न युक्तमेतत्।

|| अपीति ख-पुस्तके नोपलभ्यते।

** लयेति ख०, ग०।

मित्यत्र वक्ष्यते। जीवकर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां स एव कारणमित्यपि न साधीयः। तत्कर्मनिमित्तत्वेऽपीश्वरस्यैव जगत्कारणत्वादतः परमात्मैवात्र ब्रह्म-शब्दाभिधेयः। इममेव सूत्रार्थ*मभियुक्ता बहु मन्यन्ते। यदाह वृत्तिकारः। सर्वं खल्विति—सर्वात्मा ब्रह्मेश इति॥

## विवक्षितगुणोपपत्तेश्च॥२॥

(क) वक्ष्यमाणाश्च गुणाः परमात्मन्येवोपपद्यन्ते। मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा† सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर इति। मनोमयः—परिशुद्धेन मनसैकेन ग्राह्यः, विवेकविमोकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतेन हि‡ गृह्यते। अनेन हेयप्रत्यनीक¶कल्याणैकतानतया सकलेतरविलक्षणस्वरूपतोच्यते। मलिनमनोभिर्मलिनानामेव ग्राह्यत्वात्। प्राणशरीरः—जगति सर्वेषां प्राणानां धारकः, प्राणो यस्य शरी-

---

(क) किञ्च। विवक्षितगुणोपपत्तेश्च। मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प इत्यादिश्रुत्या 'विवक्षितानां वक्तुमिष्टानां मनोमयत्वसत्यसङ्कल्पत्वादीनां "गुणानां परमात्मन्येव "उपपत्तेः"। सत्यसङ्कल्पादिवचनञ्च ब्रह्मवाक्यत्वबोधकमिति 'च'कारार्थः॥२॥

---

* सूत्रमिति ग०। पाठोऽयमसमीचीनतया प्रतिभाति।

† सर्वकर्मेति ख-ग-पुस्तकयोर्न पठ्यते।

‡ हीति न दृश्यते ख-पुस्तके।

¶ हेयप्रत्यनीकगुणेति ग०।

रमाधेयं विधेयं शेषभूतञ्च स प्राणशरीरः । आधेयत्वविधेयत्व-शेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीत्युपपादयिष्यते । भारूपः—भास्वररूपः, अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्त इत्यर्थः । सत्यसंकल्पः—अप्रतिहतसंकल्पः । आकाशात्मा—आकाशवत् सूक्ष्मस्वच्छस्वरूपः, सकलेतरकारण-भूतस्याकाशस्यात्मभूत इति वा आकाशात्मा, स्वयञ्च प्रकाशते अन्यांश्च प्रकाशयतीति वा आकाशात्मा । सर्वकर्मा—क्रियते इति कर्म, सर्वं जगद्यस्य कर्म, सर्वा वा क्रिया यस्यासौ सर्व-कर्मा । सर्वकामः—काम्यन्त इति कामाः भोग्यभोगोपकरणा-दयः, ते परिशुद्धाः* सर्वविधाः तस्य सन्तीत्यर्थः । सर्वगन्धः—सर्वरसः—अशब्दमस्पर्शमित्यादिना प्राकृत† गन्धरसादिनिषेधादप्राकृताः स्वासाधारणा निरवद्या निरतिशयाः कल्याणाः स्वभोग्यभूताः सर्वविधाः गन्धरसास्तस्य सन्तीत्यर्थः । सर्वमिद-मभ्यात्तः—उक्तमिदं रसपर्यन्तं सर्वं कल्याणगुणजातं स्वीकृतवान् । अभ्यात्त—इति भुक्ता ब्राह्मणा इतिवत् कर्तरि क्तः प्रतिपत्तव्यः । अवाकी—वाक् उक्तिः सास्य नास्तीति अवाकी । कुत इत्य-वाह‡, अनादर इति । अवाप्तसमस्तकामत्वेनादर्तव्याभावात्¶ आदररहितः । अत एवावाकी—अजल्पकः § परिपूर्णैश्वर्य-

---

* विशुद्धा इति ख०, ग० ।

† प्रकृतेति ख० ।

‡ इत्याहेति ख० ।

¶ आदरितव्याभावादिति क०, ख० । अयुक्तोऽयं पाठः ।

§ अजल्पाक इति ग० ।

त्वाद्ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत् तृणीकृत्य जोषमासीन इत्यर्थः अत* एते गुणा विवक्षिताः परमात्मन्येवोपपद्यन्ते।

## अनुपपत्तेस्तु न शारीरः॥ ३॥

(क) तमिमं गुणसागरं पर्यालोचयतां खद्योतकल्पस्य शरीरसम्बन्धनिबन्धनापरिमितदुःखसम्बन्धयोग्यस्य बद्धमुक्तावस्थस्य जीवस्य† प्रस्तुतगुणलेशसम्बन्धोऽपि नोपपद्यत इति नास्मिन् प्रकरणे 'शारीरपरिग्रहशङ्का जायत इत्यर्थः॥

## कर्मकर्तृव्यपदेशाच्च॥ ४॥

(ख) एतमितः प्रेत्याभिसम्भवितास्मीति प्राप्यतया परं ब्रह्म व्यपदिश्यते। प्राप्तृतया च जीवः। अतः प्राप्ता जीव उपासकः। प्राप्यं परं ब्रह्मोपास्यमिति प्राप्तुरन्यदेवेदमिति विज्ञायते॥

---

(क) एवं सत्यसङ्कल्पत्वादीनां ब्रह्मण्युपपत्तिमुक्त्वा जीवे तेषामनुपपत्तिमाह—अनुपपत्तेस्तु न शारीरः। "तु"शब्दोऽवधारणार्थः। अत्र मनोमयत्वादिगुणकं परं ब्रह्मैव उपास्यं "नतु शारीरः"। कुतः। "अनुपपत्तेः"—एतेषां गुणानामनन्तदुःखमिश्रपरिमितसुखलवभागिनि अत्रे कर्मपरवशे शारीरे 'शरीरसम्बन्धिनि जीवे "अनुपपत्तेः"॥ ३॥

(ख) शारीरस्य मनोमयत्वादिगुणकत्वाभावे हेत्वन्तरमाह,—कर्मकर्तृव्यपदेशाच्च। इतश्च मनोमयत्वादिगुणकः परमात्मैव, न शारीरः। यतः। एतमितः प्रेत्याभिसम्भवितास्मीत्यादिश्रुतौ 'कर्मत्व' 'कर्तृत्वञ्च व्यपदिश्यते। तच्च, एतमित्युपास्यस्य परमात्मनः प्राप्यतया कर्मत्वेन, अभि-

---

* त इति ख०।

† बद्धमुक्तावस्थजीवस्येति ख०।